रामानंद सागर कृत

# रामायण

## चित्र-कथा

१२ विभागों में । हिंदी और अंग्रेज़ी में ।







चन्दामामा
विजया कम्बाइन्स
१८८, एन्.एस्.के. मार्ग, वडपलनी,
मद्रास ६०० ०२६ द्वारा प्रकाशित

अनुमति प्राप्त



सागर एन्टरप्राइजस्
नटराज स्टुडिओज, १९४ अंधेरी कुर्ला रोड, मुंबई-४०० ०६९.



ग्रंथ-क्रमांक ३ अब समाचारपत्र-विक्रेताओं के पास उपलब्ध

# पकड़ो अपने दोस्त को... कहीं, ग़ायब न हो जाए.

यह है मैग्नेटिक हैण्डीबॉय. और
यह मिलता है **मुफ़्त**–
25 हैण्डीप्लास्ट स्ट्रिप वाले हर पैक के साथ.
देखो कैसे-कैसे करिश्मे
दिखाता है यह– तुम्हारे
फ्रिज या कपबोर्ड से चिपक
जाये और तुम्हारी हर बात
सुने... तुम्हारी तसवीर या
कार्ड को सही ढंग से
पकड़ कर रखे... और अब, अगर
अपनी मम्मी से कहकर
तुमने इस हैण्डीप्लास्ट पैक
को जल्द नहीं ख़रीदवाया
तो ये एक और
करिश्मा दिखाएगा...
ग़ायब हो जाएगा.
**तो जल्दी करो ! अपना
हैण्डीबॉय
मैग्नेट आज
ही लो.
यह भेंट
स्टॉक रहने
तक ही.**

## मुफ़्त!

मैग्नेटिक हैण्डीबॉय
25 पट्टियों के हर पैक के साथ




हैण्डीप्लास्ट इस भेंट के बिना भी उपलब्ध है.

HTA 1549

दृढसङ्कल्पानां चतुर्णां मण्डली-प्रमुखोऽस्ति यूसुफ:, अपरः ज्ञानी-गुरुस्वामी, अन्वेषण प्रिया नैन्सी तृतीया, चतुर्थश्चास्ति परमः यो हि विपत्सु धीरः प्राकृतिकसौन्दर्यमुग्धो वीरः।

व्यतीतानि दिनानि त्रीणि अभयारण्ये परं क्वापि न दृश्यते साइबेरियाक्षेत्रात् आगन्तुकानां सारसानां पंङ्क्तिः।

जानासि, पञ्चसहस्त्र किलोमीटरमितं सुदीर्घ-मार्गमतिक्रम्य ते अत्रागच्छन्ति.....सूर्यः पर्वताः नद्यश्च तेषां मार्गदर्शकाः तेषां स्वनस्तु त्रिकिलोमीटरमितादन्त-रालादपि श्रोतुं शक्यते।

तत्तु सर्वं समीचीनम्, गुरुः! परमस्माभिस्तु गन्तव्यमप्यस्ति।

पुनश्च गुरुवासरात् विद्यालयमपि गन्तव्यम्।

हा! हन्त मित्र! सारसपंक्तेः, प्रथम दर्शनं विनैव निवर्तनीयं किम?

जानासि किमर्थमेतत्?

अकस्मादेव.....

याऽऽऽऽऽऽहूऽऽऽऽऽ

अहो! नूनं अनेन भीषणकोलाहलेन संत्रस्ताः एव सारसाः अत्र नायान्ति। सर्वथा पशुवद् आचरणं...

HO! HO! HO! HO!

पश्य ! पश्य ! आगच्छति सारसपंक्तिः ।

परं ते अत्र नैव अवतरिष्यन्ति अहो ! ते तु प्रतिगच्छन्ति ।

रं ब्रा हो! हो! हो! हो!

हो! हो!

परम ! पृहि । एतान् शामयामो वयम् ।

बन्धुवर्याः ! कृपया शाम्यन्तु कोलाहलम् । खगान् त्रासयन्ति भवन्तः ।

!!

बन्धुवर्याः ? किमिति उच्यते ! भोः ! पश्य, तत्क्षणमेव यदि न विरमसि, तर्हि कारा एव गृहं भविष्यति तव । स्पष्टं कथयामि ।

सत्यं वदति सा । विधिरयम् ।

विधिस्तु वर्तते परं यावद् वयं सर्वे सम्भूय न प्रयतिष्यामहे, तावन्न कोऽपि लाभः ।

इदं तु त्वया अधुनैव प्रमाणितम् ।

खगाः प्रत्यागच्छन्ति ! कथं शान्ताःभव्यास्ते सर्वे ! अवतरन्ति ते !

साधुवादाः, साहसिकाः बालाः !

रचयिष्यामः, रक्षिष्यामः

सुन्दरं भारतं स्वकीयम्

त्वयापि मूर्खाणां अविचारितकार्यैः नश्यमानं पर्यावरणं रक्षणीयम् । वयं सम्मिल्य प्रयतिष्यामहे चेत्तर्हि भारतस्य सौन्दर्यं अक्षुण्णं स्थास्यति ।



# चन्दमामा

नवम्बर्-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

A CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डि'

संस्कृतज्ञाः लोके विरलाः एव। अतः एकैकः अपि संस्कृतज्ञः अधिकाधिकं समयं संस्कृतसेवार्थं व्ययीकुर्यात् इति एषा अपेक्षा तु नितरां जागर्ति। किन्तु उद्योग-कुटुम्बनिर्वहणादिषु व्यग्राः बहवः एतस्यां दिशि न चिन्तयन्ति। एवं लक्ष्यदर्शनं न भवति इति तु प्रथमा समस्या। केचन तु लक्ष्यदर्शनं प्राप्नुवन्ति, किन्तु कौटम्बिकसमस्याभिः नितरां बद्धाः भवन्ति ते। अतः ते कार्यं कर्तुं न शक्नुवन्ति। अन्ये केचन कार्यं करणीयम् इति अभिलषन्तः अपि कथं करणीयम् इति अजानन्तः किञ्चित् किमपि कृत्वा फलम् अप्राप्य निराशया मौनं तिष्ठन्ति। इतरे केचन लक्ष्यदर्शनं प्राप्य कार्यं कर्तुम् अग्रे आगत्य अपि सम्भूय कार्यकरणे असमर्थाः भवन्ति। गच्छति काले भिन्नाभिप्रायाः उत्पद्यन्ते। ते च भिन्नाभिप्रायाः न लक्ष्यविषये, अपि तु व्यक्तिव्यवहारविषये। एतादृशे सन्दर्भे द्वयी गतिः भवति – स्वयं निर्गमनम्, अन्यस्य दूरप्रेषणं वा। उभयथा अपि कार्यस्य तु हानिः एव।

लक्ष्यनिष्ठया सह सम्भूय कार्यकरणं न सुलभम्। व्यक्तीनां सारासारता अत्रैव निर्णीता भवति। लक्ष्यनिष्ठाः सन्तः ये सम्भूय कार्यं कर्तुं समर्थाः भवन्ति ते तु जीवने किमपि साधयिष्यन्ति एव। यतः तेषां प्रयत्नः मार्गारब्धः। मार्गारब्धाः सर्वे यत्नाः फलन्ति एव खलु?

सम्पुटः–६  नवम्बर्–१९८९  सञ्चिका–८

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



CHITRA

# धातुर्दया दुर्बले

**निष्पिष्टाऽपि परं पदाहतिशतैः शश्वद् बहुप्राणिनां**
**सन्तप्ताऽपि करैः सहस्रकिरणेनाग्निस्फुलिङ्गोपमैः।**
**छगाद्यैश्च विचर्विताऽपि सततं मृष्टाऽपि कुद्दालकैः**
**दूर्वा न म्रियते कृशाऽपि सततं धातुर्दया दुर्बले॥**

दूर्वा केनापि प्रयत्नेन न आरोप्यते। स्वयं वर्धते सा। तस्याः जीवने कियत्यः आपदः! सर्वेषां प्राणिनां पदाघातेन सा नितरां निष्पीडिता भवति। सूर्यः तीक्ष्णैः स्वकीयैः किरणैः ताम् आदिनं तापयति। अजगोमहिषादयः प्रतिदिनं तस्याः अङ्कुराणि चर्वन्ति। केचन कृषिकाः कदाचित् तां कुद्दालादिसाधनैः उन्मूलयन्ति। एवं बहवः विघ्नाः सन्ति चेदपि कृशतायां सत्याम् अपि सा मृता तु न भवति। कथम् एतत् शक्येत? कविः अत्र कारणं वदति– 'दुर्बले देवस्य दया सदाऽपि भवति एव। अतः देवः एव तां तथा रक्षति' इति।

पूर्वं विल्सन्नामकः भारते अधिकारे आसीत्। सः संस्कृतप्रोत्साहकः। अधिकारात् निवृत्तः सः यदा स्वदेशं गतः तदा तम् उद्दिश्य केचन संस्कृतपण्डिताः भारततः पत्रं लिखितवन्तः– "संस्कृतस्य इदानीं शोचनीया परिस्थितिः आगता अस्ति" इति। तेभ्यः पत्रं लिखन् विल्सन्महाशयः स्वकीये पत्रे एतं श्लोकम् उदाहरति। "दुर्बले देवस्य दया सदा भवति एव। अतः तावती चिन्ता मास्तु" इति सान्त्वनं करोति सः।

'देवः दुर्बलघातकः' इति केचन मन्यन्ते। 'धातुः दया दुर्बले' इति अपरे केचन भावयन्ति। किन्तु 'देवः प्रयत्नस्य प्रोत्साहकः' इत्यत्र तु नास्ति विवादः। वयं तु संस्कृतोन्नतिं हृदयतः इच्छामः। अतः प्रयत्नांशे वयम् अग्रगामिनः स्याम।

मार्गाः विभिन्नाः भवन्तु नाम कामम्, अस्माकं लक्ष्यं तु अभिन्नम्। सुविचिन्त्य आश्रितः मार्गः, प्रामाणिकः प्रयत्नः च भवतः चेत् फलं सुनिश्चितम् इति वयं जानीम एव।



# र स वा र्ताः




## अतिप्राचीनः पुष्पविकासः

दशकोटिवर्षेभ्यः पूर्वम् अपि पुष्पाणि विकसन्ति स्म इति विश्वासः आसीत्। किन्तु एषु दिनेषु जर्मनविज्ञानिनः सप्रमाणं निरूपितवन्तः यत् ३००,०००,००० वर्षेभ्यः पूर्वम् एव पुष्पाणां विकसनम् आसीत् इति।

## नमस्कारः कृष्णसर्पाय

जैनाः कृष्णसर्पम् अदृष्टदेवतां मन्यन्ते। धनबाद् समीपे निर्मितस्य भगवतः परेशनाथस्य आलयस्य प्रारम्भोत्सवकाले कश्चन दशपादपरिमाणमितः कृष्णसर्पः आलयगोपुरे दृष्टः। कार्यक्रमसमाप्तिपर्यन्तम् अपि अयं सर्पः फणां चालयन् तत्रैव आसीत्। एतत् दृष्ट्वा सहस्रशः भक्ताः भक्त्या तं नमस्कृतवन्तः।






## अधिकासु भाषासु अनुवादः

युनेस्कोप्रकटनात् ज्ञायते यत् प्रपञ्चे अधिकासु भाषासु अनूदितं पुस्तकं नाम 'मिकी मौस् साहसानि' इति। लेनिन्ग्रन्थानां द्वितीयं स्थानम्। आगाक्रिस्टीकथाः तृतीयं स्थानं, बैबल् चतुर्थं स्थानं च अलङ्कुर्वन्ति।

## लघुतमं कम्प्यूटर्

हस्तपुस्तकसदृशम्, एकाङ्गुलस्थौल्ययुतं च कम्प्यूटर्-यन्त्रम् एषु दिनेषु निर्मितम् अस्ति। उत्पीठिकायाः उपरि स्थापनार्हं कम्प्यूटर्यन्त्रं यावत् करोति तावत् कार्यं तु एतत् लघुतमं कम्प्यूटर् अपि करोति एव।



# पादरक्षाधारणम्

नरेशः कश्चन वलयविक्रयिकः। सः स्वभावेन अतीव कृपणः। तस्य गृहस्य पार्श्वे अचलः नाम कुसीदवणिक् निवसति। सोऽपि नरेशः इव महाकृपणः एव।

एकदा नरेशः कुसीदवणिजम् अचलं सूचितवान्– "भोः मित्र! आवाम् एकं पादरक्षायुगलं क्रीणीयाव। अर्धं धनं भवान् ददातु। पुनः अर्धम् अहं दास्यामि" इति।

"एतदपि उचितम् एव। तदा उभाभ्याम् अपि धनं सञ्चितं भवति। किन्तु तत् युगलं केन कदा धर्तव्यम् इति समस्या भवेत् खलु? तदर्थं कश्चन नियमः भवतु। वाणिज्यार्थं बहिः यदा यस्य गमनं भवति तदा सः एतत् धरतु" इति उक्तवान् अचलः।

नरेशः अङ्गीकृतवान्। अनन्तरं पादरक्षायुगलं क्रीतम्। वलयविक्रयिकः नरेशः प्रतिदिनं बहिः गमनसमये पादरक्षां धृत्वा गच्छति। कुसीदवणिजः तु अटनम् एव न भवति। आधिरूपेण वस्तूनि स्वीकृत्य धनं यच्छन् सः एकत्र एव उपविशति खलु? अतः पादरक्षाधारणे तस्य समानः अधिकारः अस्ति चेदपि सः पादरक्षां धर्तुम् अवकाशम् एव न प्राप्नोति।

एतदर्थं किं करणीयम् इति सः बहुधा चिन्तितवान्। अन्ते सः निश्चितवान् यत् यदा वलयविक्रयिकः नरेशः निद्रां कुर्वन् भवति तदा पादरक्षां धृत्वा अटनीयम् इति। एतदनुगुणं सः प्रतिदिनं रात्रौ पादरक्षां धृत्वा अटितवान्।

कानिचन दिनानि अतीतानि। पादरक्षा सर्वथा जीर्णा जाता। "नूतनं पादरक्षायुगलं क्रीणीयाव" इति सूचितवान् नरेशः।

"इतः परं पादरक्षाक्रयणविषये मां किमपि मा वदतु। अहं तत् न इच्छामि" इति उक्तवान् अचलः।

"किमर्थं भोः?" इति आश्चर्येण पृष्टवान् नरेशः।

"निद्रां परित्यज्य रात्रौ कति दिनानि पादरक्षां धृत्वा अटनं शक्येत? अहं तु रात्रौ सुखेन निद्रां कर्तुम् इच्छामि" इति उक्तवान् अचलः।






# तालवृक्षस्य अधः...

रत्नगिरिराज्ये पूर्वं कुबेरमिश्रः नाम वणिक् आसीत्। दौर्भाग्यवशात् सः बहुधा हानिम् अनुभूतवान्। एतस्य परिहारोपायः कः इति सः अहोरात्रं चिन्तयति।

एषु एव दिनेषु कश्चन ज्योतिषिकः तस्य गृहम् आगतवान्। सः प्रवृत्तं सर्वं ज्ञात्वा कुबेरमिश्रस्य जन्मकुण्डलीं परिशील्य उक्तवान्– "श्रीमन्! एतस्मिन् नगरे निवासेन भवान् सद्यः शुभफलं न प्राप्स्यति। अतः समुद्रमार्गेण विदेशं गत्वा वाणिज्यं किमपि कृत्वा प्रत्यागच्छतु। तदनन्तरं भवान् उत्तमानि दिनानि द्रक्ष्यति" इति।

कुबेरमिश्रस्य समीरः नाम एकमात्रपुत्रः आसीत्। सः स्वभावेन न दुष्टः। किन्तु तदीयाः सुहृदः पानशीलाः द्यूतरताः च आसन्। तादृशैः सह अयं सदा अटति।

समुद्रप्रयाणं कर्तुं निश्चितवान् कुबेरमिश्रः समीरम् उक्तवान्– "वत्स! ज्योतिषिकस्य सूचनानुसारम् अहं वाणिज्यार्थं विदेशं गच्छन् अस्मि। यावत् अहं प्रत्यागमिष्यामि तावत् भवता अत्रत्यं वाणिज्यं श्रद्धया निर्वहणीयम्। मातुः कष्टं किमपि यथा न स्यात् तथा व्यवहारः स्यात् भवतः" इति।

"अस्तु तात!" इति सर्वम् अङ्गीकृतवान् समीरः।

कुबेरमिश्रः पुनः उक्तवान्– "भवान् बुद्धिमान् इति अहं जानामि। किन्तु दुष्टानां मित्राणां सम्पर्कः न उचितः। ततः हानिः एव सिध्यति। अतः पानशीलैः द्यूतासक्तैः च सह अटनं त्यजतु तावत्" इति।

पितुः वचनं श्रुत्वा आश्चर्यं प्रकटयन् समीरः पृष्टवान्– "यः उपदेशः इतः पूर्वं न कृतः स च इदानीं क्रियमाणः अस्ति, किमर्थम्?" इति।

"अनामिका"



''तत्र कारणम् अस्ति। एतावत्पर्यन्तं भवान् बालः आसीत्। इदानीं तारुण्यं भवतः। तारुण्यमदः यत्किमपि कारयितुम् अर्हति। अन्यच्च इतः परं भवान् गृहस्य यजमानः भविष्यति। अतः मया सर्वं सुस्पष्टम् उक्तम्'' इति उक्तवान् कुबेरमिश्रः।

तदा समीरः उक्तवान्– ''दुष्टानां मित्राणां सम्पर्के अहं यत् अस्मि तत्र कानिचन कारणानि सन्ति। ते सर्वे मम बाल्यमित्राणि। तैः सह एव मया क्रीडितम् अटितं च। इदानीं तान् अहं कथं त्यजेयम्? कथं स्नेहधर्मं विरुध्य व्यवहरेयम्? एतत् प्रथमं कारणम्। अहं तेषाम् अपेक्षया बुद्धिमान्। तेषाम् इव मम दुर्व्यसनानि न सन्ति। अतः ते मयि आदरं प्रकटयन्ति। तेषां स्वभावं जानन् अपि तान् अहं न दूरीकृतवान् यत् ततः ते मां प्रशंसन्ति। एतेन मम नितरां सन्तोषः भवति। तेषां मैत्र्याः अपरं कारणम् एतत्। यदि तैः सह मिलेयं तर्हि अहं दुष्टः भवेयम् इति केचन वदन्ति। तेषां वचनं मिथ्यां कर्तुम् इच्छन् एतादृशैः सह अटामि। एतत् तृतीयं कारणम्'' इति।

पुत्रस्य वचनं श्रुत्वा हसन् कुबेरमिश्रः उक्तवान्– ''भवतः चिन्तनं युक्तम् एव। किन्तु अनुभवी अहं वदामि-तेषां सहवासेन अलम्। अस्माकं मित्राणि आधारीकृत्य अस्मदीयं गौरवम् अगौरवं वा सिद्ध्यति। आभाणकं किञ्चन श्रुतं खलु भवता– 'तालवृक्षस्य अधः क्षीरपाणम् इव...' इति? अतः तेषां सम्पर्कः इतःपरं मास्तु'' इति।

तालवृक्षस्य अधः क्षीरं पीतं चेत् किं भवेत् इति न जानाति समीरः। किन्तु पितरं प्रष्टुं सङ्कोचः। एतावत् अपि न जानाति वा भवान् इति उपहसेत् सः इति भीतिः। अतः सः मौनं स्थितवान्।

'पुत्रः इतःपरं सन्मार्गेण गच्छेत्' इति निश्चित्य निश्चिन्तः सन् विदेशं प्रति निर्गतवान् कुबेरमिश्रः। पितुः निर्गमनानन्तरं कदाचित् समीरः चषकेण क्षीरं स्वीकृत्य गत्वा, ग्रामात् बहिः स्थितस्य तालवृक्षस्य अधः उपविश्य मन्दं पातुम् आरब्धवान्।

क्षीरस्य रुचौ कोऽपि भेदः न दृष्टः तेन। 'पिता किमर्थं तथा उक्तवान् स्यात्? तालवृक्षस्य अधः पीतस्य अपि क्षीरस्य रुचिः

यथापूर्वम् अस्ति' इति आलोचयन् समीरः हसितवान्। रुचिभेदः कदाचित् स्यात् वा इति चिन्तयन् सः क्षीरं किञ्चिदेव पुनः पुनः पिबन् रुचिम् आस्वादितवान्।

तालवृक्षस्य अधः क्षीरं पिबन्तं हसन्तं समीरं कश्चित् दृष्टवान्। सः तदीयं गृहं गत्वा तस्य मातरम् उक्तवान्– "भवत्याः पुत्रः ग्रामात् बहिः तालवृक्षस्य अधः उपविश्य सुरां पिबन् अस्ति। पानशीलानां सहवासस्य फलम् एतत्। एतावत्पर्यन्तं तु पितुः भीतिः आसीत्। इदानीं तस्य निरोद्धा कोऽपि नास्ति। अतः तदीयाः दुर्गुणाः एकैकशः बहिः आगच्छन्तः सन्ति" इति।

एतत् श्रुत्वा समीरस्य माता– "हा हन्त! कीदृशी दुर्गतिः आगता अस्माकं गृहस्य!" इति वदन्ती विलपितवती। कश्चित् गत्वा एतां वार्तां तालवृक्षस्य अधः स्थितं समीरं निवेदितवान्।

तदा समीरः तम् उक्तवान्– "मया सुरा न पीता, अपि तु क्षीरं पीतम्" इति।

"एवं वा! रुचिकरम् आसीत् खलु तत् क्षीरम्!" इति वदन् उपहसन् ततः निर्गतवान् सः।

समीरस्य हस्ते स्थिते चषके इतोऽपि किञ्चित् क्षीरम् अवशिष्टम् आसीत्। आत्मना पीतं क्षीरम् एव इत्येतत् प्रमाणीकर्तुम् इच्छन् समीरः क्षीरपात्रेण सह गृहं गतवान्।




गृहे माता इतोऽपि अश्रूणि स्रावयन्ती एव आसीत्। तां वस्तुस्थितिं निवेदयितुं प्रयत्नं कृतवान् समीरः। किन्तु तत् अविगणयन्ती माता पुत्रं तर्जितवती– "दुष्टमित्राणां सहवासः केवलम् आसीत् इति चिन्तितम् आसीत् मया। दुर्व्यसनम् अपि अस्ति इति इदानीं ज्ञातम्। असत्यकथनम् अपि आरब्धं भवता" इति।

"अम्ब! चषके स्थितं क्षीरम् एव, न तु सुरा। भवती एव परीक्ष्य जानातु तावत्" इति उक्तवान् समीरः।

"किं परीक्षणेन? यदि चषके स्थितं क्षीरम् एव स्यात् तर्हि तस्य पानार्थं किमर्थं तालवृक्षपर्यन्तं गन्तव्यम् आसीत्। गृहे किम् अवकाशः न आसीत्? मां सुलभतया

वञ्चयितुं शक्यते इति चिन्तितवान् वा?'' इति उक्तवती माता।

''अम्ब! अविचार्य यत् कृतं तदर्थं क्षमां प्रार्थये। मां क्षाम्यतु कृपया। इतःपरम् एवं न करोमि। गृहे एव क्षीरं पिबामि'' इति वदन् पानार्थं क्षीरपात्रम् उन्नीतवान् समीरः।

समीरस्य माता कोपेन चषकं दूरे पातयित्वा– ''सुरा पातव्या एव चेत् कुत्रापि दूरे पिबतु रे! पिता नास्ति इत्यतः सधैर्यं मम पुरतः पिबन् अस्ति खलु भवान्! अहो दौर्भाग्यम्!'' इति विलपितवती।

''चषके स्थितं क्षीरम् एव, न तु सुरा इति मम वचने कुतो वा न विश्वसिति भवती?'' इति रोषेण पृष्टवान् समीरः।

तावता तत्र कश्चन मार्जारः आगतः। चषकात् पतितं क्षीरम् अपिबत् सः। अनन्तरं इतस्ततः वलन् ततः अगच्छत्। तत् दृष्ट्वा माता उक्तवती– ''चषके स्थितं क्षीरम् एव, न तु सुरा इति मया इतोऽपि विश्वसनीयं खलु?'' इति।

किम् उत्तरं दातव्यम् इति अजानन् हस्तद्वयेन शिरः गृहीत्वा एकत्र उपविष्टवान् समीरः। तदा माता स्वस्य अश्रूणि मार्जयन्ती उक्तवती– ''पूर्वम् एव दण्डनादिना सन्मार्गे आनेतव्यः आसीत् भवान्। दुष्टसम्पर्कः निवारणीयः आसीत्। भवति कुटुम्बभारः निक्षिप्तः खलु आर्यपुत्रेण! इतः परं गृहस्य का वा गतिः स्यात्?'' इति।

तावता 'क्षीरं पुनः प्राप्येत' इति आलोचितवान् मार्जारः पुनः स्खलन् समीरसमीपम् आगतः। समीरः मार्जारस्य पादं परीक्षितवान्। तत्र दाहजनितः बुद्बुदः आसीत्। तं मात्रे प्रदर्शयन् सन्तोषेण उक्तवान् समीरः– ''अम्ब! मार्जारस्य वलनस्य कारणम् एतत्। वस्तुतः तु चषके स्थितं क्षीरम् एव'' इति।

तालवृक्षस्य अधः क्षीरं पीयते चेत् किं भवेत् इति स्वानुभवेन ज्ञातवान् आसीत् समीरः। अतः सः दुष्टसम्पर्कं परित्यक्तवान्। 'उत्तमः' इति ख्यातिं प्राप्तवान् च।






# लुण्टाकः युवराजः

हरिद्वर्णेन शोभमानानां पर्वतानाम् उपत्यकायां शान्तिपुरं नाम नगरम् आसीत्। एतत् सुमेधराज्यस्य राजधानी। नामानुगुणम् एतत् नगरं शान्ततया एव आसीत्। अद्यावधि सुमेधराज्यं ये ये राजानः पालितवन्तः ते सर्वे एतस्य नगरस्य सौन्दर्यवर्धने विशेषतः प्रयत्नं कृतवन्तः आसन्। एतस्य मार्गाः सुविशालाः आसन्। मार्गम् उभयतः पङ्क्तिरूपेण वृक्षाः आरोपिताः आसन्। नगरं योजयाबद्धतया निर्मितम् आसीत्।

इदानीं सुमेधराज्यं शान्तिदेवः पालयति। एतस्य शासनकाले राजधान्याः, समग्रस्य देशस्य च जनाः सुखेन शान्त्या च निवसन्ति स्म। प्रजानां हितार्थं राजा बहुधा धनव्ययं करोति स्म।

एतद्विषये वार्तालापं कुर्वन् सेनापतिः वीरसिंहः कदाचित् शान्तिदेवम् उक्तवान्– "महाप्रभो! अभिवृद्धिपराणि कार्याणि निरन्तरं यथा प्रचलेयुः तथा कर्तुं सम्पद्बलं नितराम् आवश्यकम्। तस्य सम्पद्बलस्य सम्पादनार्थं सुलभः प्रशस्तः च उपायः नाम प्रतिवेशिराज्यानाम् उपरि आक्रमणम्। एवं करणेन सम्पत् अपि लभ्यते, राज्यस्य विस्तारः अपि सेत्स्यति" इति।

तदा राजा मन्दहासपूर्वकम् उक्तवान्– "वीरसिंह! स्वनामानुगुणं चिन्तयन् अस्ति भवान्। किन्तु विना कारणम् अन्यस्य राज्यस्य उपरि आक्रमणं न शोभते। तथा कृतम् आक्रमणं लुण्ठनतुल्यम्। तथा कृत्वा सम्पादितं धनं चिरकालं न तिष्ठेत् अपि।



अन्यच्च धनसम्पादनार्थं वयम् एतादृशं मार्गम् अनुसरामः चेत् प्रजाः अलसाः भवन्ति। देशहितार्थं परिश्रमः करणीयः इति भावना एव प्रजासु लुप्ता भवेत्। धनदाहः वर्धते इत्यतः आक्रमणम् अपि अनुवर्तिष्यते। सर्वदा वयम् एव जयिनः भवामः इति निश्चयः अपि नास्ति खलु? यदि वयं पराजिताः भवेम तर्हि शत्रवः अस्माकं राज्यं लुण्ठयन्ति एव। वयं जयिनः भवामः चेदपि निश्चिन्तता तु न भवेत्। पराजिताः राजानः प्रतीकारसाधनार्थं समयं प्रतीक्षमाणाः एव तिष्ठन्ति। एवम् अनर्थपरम्परा एव सम्भवेत्। तदा देशे शान्तिः कुतः? अस्माकम् उद्देशः एव असफलः भवेत्'' इति।

''एवं तर्हि युद्धम् अनावश्यकम् इति भावयति भवान्। तर्हि देशे सैन्यं किमर्थम्? तदर्थं क्रियमाणः व्ययः व्यर्थः खलु?'' इति उक्तवान् वीरसिंहः।

''अन्येषाम् आक्रमणात् आत्मनः रक्षणार्थं सैन्यम् आवश्यकम् एव। किन्तु सर्वे राजानः युद्धात् जायमानं दारुणं परिणामं यथा जानीयुः तथा कृत्वा सैन्यबलं न्यूनीकरणीयम् इत्येव मम आशयः। युद्धात् धननाशः, प्राणनाशः कालव्ययः च महता प्रमाणेन भवति इति भवान् जानाति एव। यदि युद्धप्रस्तावः एव न स्यात् तर्हि तदर्थं यत् व्ययीक्रियते तत् धनं प्रजाहितकार्यार्थं व्ययीकर्तुं शक्येत। अतः सर्वेषां राज्ञां मनसः परिवर्तनार्थं प्रयत्नः करणीयः'' इति उक्तवान् शान्तिदेवः।

''प्रभो, क्षन्तव्यः अहम्। मम तु एवं भाति यत् भवान् स्वप्नलोके विहरन् अस्ति इति'' इति उक्तवान् वीरसिंहः। एवं कथयतः तस्य मुखे तिरस्कारभावः स्फुटं दृश्यते स्म।

वीरसिंहः राज्ञः समीपबन्धुः। अन्यच्च तयोः मध्ये बाल्यतः अपि आत्मीयता विशेषतः आसीत्। अतः एव राजानम् एवं वक्तुं शक्तवान् वीरसिंहः।

''वीरसिंह! भवतः वचनं सत्यम् एव। अहं स्वप्नलोके विहरन् अस्मि। अहं तादृशं प्रपञ्चं स्वप्ने पश्यन् अस्मि, यत्र च अहितस्पर्धया परस्परनाशार्थं बुद्धेः व्ययम्



अकुर्वन्तः जनाः लोकहितार्थं परहितार्थं च कार्यं कुर्युः, परगुणान् दृष्ट्वा सन्तोषम् अनुभवेयुः, भयं विना सर्वेऽपि निश्चिन्ततया जीवनं यापयेयुः च। अतः एव अहम् अस्मदीयं सैन्यं प्रजोपयोगिकार्येषु नियोजयितुम् इच्छामि। सैनिकानां साहाय्येन वयम् अपेक्षिते स्थले सेतुनिर्माणं करवाम। कुल्याखननपूर्वकं जलव्यवस्थां कारयाम। मार्गपार्श्वे सस्यानि आरोपयाम। एतादृशानि कार्याणि कारयामः चेत् सैनिकानां निमित्तं यः व्ययः क्रियते सः व्यर्थः न भवति" इति उक्तवान् राजा।

तदा वीरसिंहः असमाधानेन राजानम् उक्तवान्– "अपूर्वा योजना भवतः! इतः परं सर्वे सैनिकाः गोदोहनम् अभ्यस्येयुः इति आज्ञां करिष्यामि। गृहाणां स्वच्छीकरणे, जलानयने, पाककार्ये च सैनिकाः स्त्रीणां साहाय्यं कुर्युः इति नियमं करिष्यामि" इति।

सेनापतेः वचनेन राजा न कुपितः। यतः राजा तस्मिन् विशेषतः स्निह्यति। अतः सः मन्दहासपूर्वकम् उक्तवान्– "अये वीराधिवीर! सैनिकाः पाकादिकं कुर्युः इति मम आशयः न। यदि ते तादृशानि कार्याणि कुर्युः तर्हि तत्र न अपमाननम्। अन्येषां प्राणानाम् ऐश्वर्यस्य च हरणस्य अपेक्षया एतादृशानां कार्याणां करणं वरम् एव। सैनिकाः युद्धात् अन्यत् किमपि न कुर्युः इति नियमः नास्ति खलु? जनहितकार्येषु तेषां सहभागः भवितुम् अर्हति एव। शान्ततया आलोचयति चेत् मम आशयस्य आन्तर्यं भवान् ज्ञातुं शक्नुयात्" इति।

तावता मन्त्री तत्र आगतवान्। सेनापतिः वीरसिंहः चर्चाम् अनुवर्तयितुम् अनिच्छन् ततः निर्गतवान्। शान्तिदेवः मन्त्रिणा सह शासनविषये चर्चाम् आरब्धवान्।

तस्मिन् एव दिने रात्रिसमये सेनापतिः वीरसिंहः दलनायकान्, अन्यान् विश्वासार्हान् कांश्चन भटान् च रहसि समावेश्य तान् उक्तवान्– "श्वः आरभ्य सर्वे सैनिकाः खड्गान् गृहे स्थापयन्तः कृषिक्षेत्रेषु कर्षणकार्यं कुर्युः इति वदति महाराजः। जलोद्धरणं, काष्ठच्छेदनं, पाके साहाय्यम्



"उच्चैः किमपि मा वदन्तु। यतः अत्र भित्तयः अपि कर्णवत्यः भवन्ति" इति जागरूकतावचनम् उक्तवान् वीरसिंहः।

वीरसिंहेन विशेषजागरूकता आश्रिता चेदपि एतस्य रहस्यसमालोचनस्य वार्ता महाराजेन ज्ञाता एव। किन्तु तस्यां सभायां किं चर्चितं, किं निर्णीतम् इति तु न ज्ञातं तेन। 'एषः चिन्ताजनकः महाविषयः न' इति औदासीन्यं प्रकटितवान् राजा। राजा स्वभावेन सज्जनः। वीरसिंहः तस्य आत्मीयः अपि। अतः वीरसिंहः अकार्यं किमपि कुर्यात् इति आलोचयितुम् अपि न शक्तवान् राजा। किन्तु एतत् सौजन्यं विश्वासश्चापि घोरस्य परिणामस्य कारणम् अभवत्।

इत्यादिकं भवतां दैनन्दिनं कर्तव्य स्यात् इति महाराजः इच्छति" इति।

एतत् श्रुत्वा सर्वे दलनायकाः आश्चर्यम् अनुभूतवन्तः। वीरसिंहः क्षणकालस्य मौनस्य अनन्तरं पुनः तान् उक्तवान्– "मित्राणि! वयं सर्वे युद्धविद्यासु निपुणाः। साहसकार्येषु अस्माकं प्रवृत्तिः। आयुधचालनम् अस्माकं नित्यकर्म। एवं स्थिते किं वयं खड्गादिकं परित्यज्य हलं ग्रहीतुं शक्नुयाम? किं चिन्तयन्ति भवन्तः एतद्विषये? भवताम् आशयं स्पष्टं ज्ञातुम् इच्छामि" इति।

"यथा भवान् वदति तथा आचरणार्थं सिद्धाः वयम्" इति सर्वे एकस्वरेण उक्तवन्तः।

तेषु दिनेषु राजकुमारस्य द्वितीयः जन्मदिनोत्सवः आसन्नः आसीत्। अतः मन्त्रिप्रभृतयः, अन्ये राजोद्योगिनः च जन्मदिनोत्सवस्य व्यवस्थायां मग्नाः आसन्। उत्सवस्य समाप्तेः अनन्तरं वीरसिंहेन सह स्पष्टतया वार्तालापः करणीयः इति आलोचितवान् राजा। किन्तु आलोचनायाः कार्यान्वयनात् पूर्वम् एव घोरा विपत्तिः उपस्थिता।

सर्वैः सकुतूहलं निरीक्षितः जन्मदिनोत्सवः आगतः एव। उषःकालतः एव मङ्गलवाद्यानि वादितानि। विनोदकूटाः च आरब्धाः। राजप्रासादे रमणीयतया अलङ्कृते विशाले मण्डपे, द्विवर्षीयं स्वपुत्रम्

अङ्के आरोप्य उन्नतासने उपविष्टा आसीत् राज्ञी। नागरिकाः समूहरूपेण आगच्छन्तः राज्ञीं राजकुमारं च शुभाशंसनेन अभिनन्दन्ति स्म। राजप्रासादे सर्वत्र सन्तोषतरङ्गाः प्रसृताः आसन्।

अन्धकारप्रसारस्य अनन्तरं प्रासादे जनसम्मर्दः न्यूनः जातः। राज्ञी निद्रावशं गतं बालम् उन्नीय शयनमन्दिरे आन्दोलिकायां शायितवती।



रात्रौ राजभवनस्य पुरतः प्रचलत् उत्सवाचरणं द्रष्टुं सहस्रशः जनाः सम्मिलिताः आसन्। विविधानि स्फोटकानि सशब्दम् उपरि गत्वा आकाशं वर्णरञ्जितं कुर्वन्ति स्म। कुत्रचित् नाट्यं प्रचलति चेत्, पुनः कुत्रचित् विदूषकवेषधारिणः जनान् रञ्जयन्ति स्म। सर्वत्र उत्साहः दृश्यते स्म। दिने यावन्तः जनाः आसन् ततोऽपि द्विगुणिताः जनाः इदानीं तत्र दृश्यन्ते स्म।

प्रायः राजभवने सर्वेषु द्वारेषु रक्षकभटाः सदा रक्षणकार्ये निरताः भवन्ति। किन्तु अद्य राजकुमारस्य जन्मोत्सवः इत्यतः रक्षणकार्ये शैथिल्यं दृश्यते स्म। जनानां गमनागमनं विशेषतः दृश्यते स्म तत्र।

यावत् राज्ञी शयनार्थं सन्नाहं कुर्वती आसीत्। तावता राजा शान्तिदेवः त्वरया शयनमन्दिरं प्रविष्टवान्। तस्य तादृशम् आगमनं दृष्ट्वा राज्ञी क्षणकालं चकिता, अनन्तरं सा मृदहासं प्रकटितवती। राजा इतः पूर्वं कदापि एवं त्वरया शयनमन्दिरं न आगतः आसीत्।

"भवान् नितरां श्रान्तः इव लक्ष्यते, प्रभो!" इति उक्तवती राज्ञी।

राजा उत्तरं किमपि अयच्छन् पार्श्वस्थां राज्ञ्याः प्रियसखीं दृष्टवान्। राज्ञः इङ्गितं जानती सा ततः निर्गतवती।

राज्ञी उत्कण्ठया महाराजं पृष्टवती– "आर्यपुत्र! किं प्रवृत्तम्?" इति।

राजा मौनेन एव द्वारं पिधाय अर्गलेन कीलयित्वा ललाटस्थं स्वेदम् अपनयन् उक्तवान्– "देवि! किं प्रवर्तते, किमर्थं प्रवर्तते इत्यादिकं वक्तुम् इदानीं समयः नास्ति। इदानीं प्राणापायपरिस्थितिः



उपस्थिता अस्ति इति एतावत् जानातु। भवत्या एतत्क्षणे एव रहस्यमार्गेण पलायनं करणीयम्'' इति।

''किम्? रहस्यमार्गेण निर्गन्तव्यम् इति?'' इति आश्चर्येण भीत्या च पृष्टवती राज्ञी।

''आम्'' इति गम्भीरस्वरेण दृढतया उक्तवान् शान्तिदेवः। अशनिघातेन पीडिता इव अभवत् राज्ञी। शयनमन्दिरतः अरण्यमध्यं प्राप्तुं कश्चन सुरङ्गमार्गः आसीत्। तं मार्गं राजा शान्तिदेवः पितुः सकाशात् ज्ञातवान् आसीत्। तदीयः पिता च स्वपितुः सकाशात् ज्ञातवान् आसीत्। कदाचित् एकवारम् एव शान्तिदेवः पत्न्यै तं मार्गं प्रदर्शितवान् आसीत्। तत्समये तौ तेन सुरङ्गमार्गेण किञ्चिद्दूरं गत्वा प्रत्यागतवन्तौ आस्ताम्। पूर्वं कुतूहल-कारणतः येन मार्गेण किञ्चिद्दूरं गतं, तेन सुरङ्गमार्गेण प्राणरक्षणार्थम् एवं गमनं भवेत् इति राज्ञी न कल्पितवती आसीत् अपि।

''उत्सवदिने अद्य मया एकाकिन्या गन्तव्यम् इति भवतः आशयः वा?'' इति कम्पमानेन स्वरेण पृष्टवती राज्ञी।

''एकाकिन्या न, पुत्रेण सह गन्तव्यं भवत्या'' इति उक्तवान् राजा।

''भवन्तं विना कथम् अहं गच्छेयम्?'' इति अश्रूणि स्रावयन्ती पृष्टवती राज्ञी।

''देवि! पुत्रस्य निमित्तं भवत्या तथा करणीयम् एव। शत्रूणां प्रधानं लक्ष्यम् अहम् एव चेदपि ते पुत्रं भवतीं च नाशयेयुः एव। अहं यदि भवत्या सह पलायनार्थं प्रयत्नं कुर्यां तर्हि अस्मान् त्रीन् अपि ते कथञ्चित् नाशयेयुः। अहं यदि अत्रैव स्थित्वा युद्धं कुर्यां तर्हि भवती सपुत्रं पलायनार्थं किञ्चित् वा समयावकाशं प्राप्नुयात्'' इति उक्तवान् राजा।

अनन्तरं सः, वीरसिंहेन सिंहासनस्य स्वायत्तीकरणार्थं क्रियमाणं प्रयत्नम्, उत्सवसन्दर्भे एव आगतां विपदं च सङ्क्षेपेण निरूपितवान्।

सामान्याः प्रजाः, सामान्याः सैनिकाः च राज्ञि विशेषादरवन्तः सन्ति इति तु सत्यम् एव। किन्तु असङ्घटितानां लक्षशः जनानाम्

आशयस्य विरुद्धं व्यवहृत्य सङ्घटिताः केचन प्रबलाः विजयं साधयितुं शक्नुवन्ति एव खलु?

राजप्रासादस्य सर्वाणि द्वाराणि वीरसिंहपक्षीयैः स्वायत्तीकृतम् अस्ति इति गुप्तचरद्वारा ज्ञातम् आसीत् राज्ञा। राजभवनस्य पुरतः आकाशबाणादीनि स्फोटकानि उच्चैः शब्दं जनयन्ति स्म। जनाः सर्वे एतत् पश्यन्तः आनन्दपरवशाः जाताः आसन्। अस्मिन् एव सन्दर्भे वीरसिंहः प्रासादं प्रविश्य राजकुटुम्बीयान् नाशयितुं योजनां रचितवान् आसीत्। एतत् गुप्तचरद्वारा ज्ञातवान् आसीत् राजा।



राज्ञी गद्गदस्वरेण पृष्टवती– "भवतः अङ्गरक्षकाः कुत्र गताः?" इति।

"उत्सवं द्रष्टुं गच्छन्तु इति अहम् एव तान् बलात् प्रेषितवान्। इदानीम् अहं बन्दी इव। सर्वाणि द्वाराणि वीरसिंहस्य भटाः रक्षन्तः सन्ति। ते यथा न जानीयुः तथा इतः निर्गमनम् असाध्यम् एव। इदानीं वयम् अत्र स्मः इति कोऽपि न जानाति" इति विषादेन हसन् उक्तवान् राजा।

"तर्हि इदानीं किं कर्तुम् इच्छति भवान्?" इति पृष्टवती राज्ञी।

"कथञ्चित् इतः निर्गन्तुं प्रयत्नं करोमि। तत् अशक्यं चेत् तान् सम्मुखीकुर्वन् युद्धं करोमि। अहं यथा वदामि तथा भवती आचरति चेत् विजयः अर्धं प्राप्तः इव" इति उक्तवान् राजा।

"तदर्थं मया किं करणीयम्?" इति राज्ञी पृष्टवती।

"देवि! अविलम्बेन इतः निर्गच्छतु भवती। भवती, पुत्रः च सकुशलम् इतः गतौ चेत् मम काचित् तृप्तिः। शत्रूणाम् आक्रमणतः अहम् आत्मानं रक्षितुं शक्नुयाम् इति मम तु विश्वासः नास्ति। अलं वार्तालापेन। गमनार्थं सिद्धा भवतु" इति उक्तवान् राजा।

"एतत् सर्वथा अशक्यम्। भवन्तं मृत्युमुखे पतितं दृष्ट्वा अपि अहम् आत्मरक्षणं चिन्तयेयं वा? असम्भाव्यम् एतत्" इति विलपन्ती उक्तवती राज्ञी।

राजा तु वार्तालापम् अनुवर्तयितुम् अनिच्छन् सुरङ्गमार्गस्य द्वारस्य

उद्घाटनार्थम् उद्युक्तः। कोऽपि यथा न जानीयात् तथा शयनमन्दिरद्वारस्य पार्श्वे सुरङ्गमार्गस्य अपि द्वारं रचितम् आसीत्।

द्वारम् उद्घाट्य सुरङ्गमार्गे दृष्टिं प्रसारयन् राज्ञीम् उक्तवान् शान्तिदेवः– ''देवि! विलम्बः मास्तु। एकेन हस्तेन पुत्रम्, अपरेण हस्तेन दीपिकां च गृहीत्वा सुरङ्गमार्गं प्रविशतु। सुरङ्गमार्गे प्रतिपञ्चदशाङ्गुलदूरे एकैकः मणिः दृश्यते। द्वादशस्य मणेः अनन्तरं सुरङ्गस्य समाप्तिः। दीपप्रकाशेन मणयः स्फुटं प्रकाशन्ते इत्यतः मणीन् भवती सुलभतया ज्ञातुं शक्नोति। अन्तिममणेः अनन्तरम् अनतिदूरे एव शिलामयं कीलकं दृश्यते। तत् द्वित्रवारम् इतस्ततः चालयतु। तदा निर्गमनद्वारम् उद्घाटितं भवति'' इति।

राजभवनात् बहिः प्रचलन् जनानां कोलाहलः हासध्वनिः च अकस्मात् स्थगितः। सर्वत्र निःशब्दः प्रसृतः।

''वीरसिंहः आगतः इति भाति। देवि! गच्छतु। यदि शक्यम् अस्मिन् एव जन्मनि, नो चेत् आगामिनि जन्मनि वा पुनः मेलिष्यामः'' इति वदन् राजा सुप्तं शिशुं राज्ञ्याः हस्ते स्थापितवान्। दीपिकाम् अपि ज्वालयित्वा दत्तवान्। सुरङ्गमार्गस्य प्रवेशार्थं साहाय्यम् अपि कृतवान्।

अश्रूणि स्रावयन्तीं दैन्येन पश्यन्तीं च राज्ञीम् उक्तवान् शान्तिदेवः– ''भवतीम् एवं प्रेषयितुं ममापि इच्छा नास्ति। किन्तु किं करोमि? पुत्रस्य रक्षणार्थं विद्यमानः उपायः अयम् एकः एव'' इति।

राजा सुरङ्गमार्गस्य द्वारस्य पिधानं कृतवान्। तावता 'डं डमार्' इति महान् शब्दः श्रुतः। आकाशबाणस्फोटकस्य शब्दः अयम् इति तर्कितवान् राजा।

तावता केनचित् क्रियमाणः द्वार-ताडनशब्दः श्रुतः। राजा झटिति खड्गम् आकृष्य आक्रमणार्थं सिद्धः सन्– ''कः भोः सः?'' इति गम्भीरस्वरेण पृष्टवान्।

–(अनुवर्तते)






# गानपिशाची

मानवानां बुद्धिशक्तेः तीक्ष्णतां वर्धयितुम् अर्हाः कथाः वदन्तं वेतालम् अहम् अवश्यं वशीकरोमि एव इति भावितवान् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् सः। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! स्वसामर्थ्यं सम्यक् अज्ञात्वा यः कार्ये प्रवृत्तः भवति तादृशः निश्चयेन असाफल्यं प्राप्नोति। भवता यत् कार्यं स्वीकृतं तत् स्वसामर्थ्यसाध्यम् उत न इति आलोचितवान् वा भवान्? अन्यथा, यावत् तृप्तिः न प्राप्यते तावत् इतः न निर्गच्छामि इति उक्त्वा कस्मिंश्चित् गृहे निवसन्ती काचित् पिशाची अन्ते खेदेन यथा पलायितवती तथा भवता अपि विमुखता प्राप्येत। का सा पिशाची, किं कृतं तया, इति कुतूहलं वा? श्रद्धया कथां

## वेतालकथा



शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं हरपुरनामके ग्रामे कश्चन गायकः प्रसिद्धः आसीत्। तस्य नाम हरिशर्मा। तस्य हरिशर्मणः चत्वारः पुत्राः आसन्। तेषां नाम रामशर्मा, कृष्णशर्मा, देवशर्मा, विष्णुशर्मा चेति। पुत्राः अपि सङ्गीतविद्यां ज्ञात्वा मत्समानाः भवेयुः इति हरिशर्मणः आशयः आसीत्।

हरिशर्मा कानिचन दिनानि यावत् सर्वान् पुत्रान् सङ्गीतं पाठितवान्। अनन्तरं सर्वान् आहूय उक्तवान्– ''दिने दिने अहं वृद्धः भवामि। अतः भवतः सर्वान् पाठयितुम् अहं न शक्नोमि। भवन्तः मत्समानाः भवेयुः इति मम महती इच्छा तु अस्ति एव। किन्तु वार्धक्यकारणतः तदनुगुणं सामर्थ्यं तु नास्ति। अतः भवत्सु यं कमपि एकमेव मादृशं विद्वांसं कर्तुं शक्नोमि। तदर्थं योग्यः कः? इति इदानीं निर्णेतव्यम्। शिवशर्मनामकः हरिपुरे अस्ति। सः एव एतस्याः समस्यायाः परिहारं कर्तुं समर्थः। अतः भवन्तः तत्र गत्वा तं तोषयित्वा आगच्छन्तु। यः तं तोषयितुं समर्थः भवति, तम् एव अहं सङ्गीतं पाठयिष्यामि'' इति।

चत्वारः अपि सहोदराः हरिपुरं गत्वा शिवशर्माणं दृष्टवन्तः। तेषां विषयं ज्ञात्वा शिवशर्मा उक्तवान्– ''भवद्भिः युक्ते समये एव अत्र आगतम्। एतस्य ग्रामस्य सीमायां मम एकं गृहम् अस्ति। काचित् गानपिशाची तत् गृहम् आक्रान्तवती अस्ति। सा पिशाची प्रतिदिनं रात्रौ तस्मिन् गायति। अतः कोऽपि तद्गृहस्य समीपं न गच्छति। तेन कारणेन उत्तमम् अपि तद्गृहम् उपयोगाय नास्ति। तस्मात् गृहात् पिशाचीनिवारणार्थं भवतां साहाय्यं प्रार्थयामि अहम्'' इति।

''पिशाच्याः विषये साहाय्यं कर्तुं न वयं मान्त्रिकाः। अस्माभिः एतत् कथं शक्यम्?'' इति पृष्टवान् रामशर्मा।

''सा विचित्रा पिशाची। मान्त्रिकाः तां निवारयितुं न शक्नुवन्ति। गानकोविदाः केवलं तां पिशाचीं जेतुं समर्थाः। यतः सङ्गीतविदुषां विषये तस्याः अपारं गौरवम्

अस्ति" इति उक्तवान् शिवशर्मा।

आगतेषु चतुर्षु सहोदरेषु रामशर्मा धैर्यवान्। सः प्रथमं गानपिशाच्याः गृहं गन्तुम् उद्युक्तः। सन्तुष्टः शिवशर्मा रात्रौ रामशर्माणं पिशाच्याः गृहं प्रेषितवान्।

यदा रामशर्मा पिशाच्याः गृहं प्रविष्टवान्, तदा पिशाची केनयित् रागेण सुमधुरं गायन्ती आसीत्।

सन्तुष्टः रामशर्मा करताडनं कुर्वन् उक्तवान्– "अहो! अत्यन्तं मधुरं गानम्! सामान्याः एवं गातुं न शक्नुवन्ति" इति।

पिशाची गानं स्थगयन्ती पृष्टवती– "भोः, मम गानसामार्थ्यं भवता कथं ज्ञातम्? भवान् सङ्गीतविद्वान् वा?" इति।



"सत्यम्, अहं सङ्गीते विद्वान् अस्मि। भवत्याः दर्शनार्थम् एव अत्र आगतवान् अस्मि" इति उक्तवान् रामशर्मा।

तदा पिशाची अवदत्– "महान् सन्तोषः। यदि भवान् अपि एकं पद्यं गायति, तर्हि अहं सन्तुष्टा भवामि" इति।

झटिति रामशर्मा केनचित् रागेण गातुम् आरब्धवान्। तस्य प्रतिभया सन्तुष्टा पिशाची– "भोः, भवता अनुक्तं चेदपि भवतः आशयं ज्ञातवती अस्मि अहम्। किन्तु मम गानस्य यावत् प्रतिफलं न लभ्यते, तावत् अहम् एतत् गृहं न त्यजामि। अतः भवतः गानार्थं मया दीयमानं उपायनं स्वीकृत्य भवान् गच्छतु कृपया" इति उक्त्वा अमूल्यं एकं वस्त्रं तस्मै दत्तवती।

सङ्गीतविद्याकारणात् पिशाचीतः अपि उपायनं प्राप्तवान् अहम् इति सन्तुष्टः रामशर्मा शिवशर्मणः समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान्।

तत् श्रुत्वा खिन्नः शिवशर्मा उक्तवान्– "भोः, एतेन भवतः एव प्रयोजनं जातं, न तु मम" इति।

अनन्तरदिने द्वितीयः कृष्णशर्मा– "सा गानपिशाची स्वगानस्य प्रतिफलम् इच्छति। तदर्थम् अहम् उत्तमम् उपायं करोमि। तेन प्रयोजनं भवेत्" इति उक्त्वा पिशाचीगृहं गतवान्।

तदा अपि पिशाची गायन्ती आसीत्।



कृष्णशर्मा सन्तोषेण करताडनं कुर्वन् उक्तवान्– ''प्रसिद्धस्य सङ्गीतविदुषः हरिशर्मणः पुत्रः अहं कृष्णशर्मा। भवत्याः अपूर्वेण गानपाण्डित्येन सन्तुष्टः अहं 'अमानुषी गानसुन्दरी' इति भवत्यै प्रशस्तिं ददामि'' इति।

पिशाची भक्त्या कृष्णशर्माणं नमस्कृत्य अवदत्– ''बहुकालानन्तरं मम गानस्य प्रतिफलं लब्धम् इति तु महतः सन्तोषस्य विषयः। भवान् अपि एकेन गानेन मां कृपया तोषयतु'' इति।

तदा कृष्णशर्मा उत्तमरागेण गानं कृतवान्। तत् श्रुत्वा पिशाची– ''भवता प्रशस्तिः तु दत्ता। किन्तु तया प्रशस्त्या मया तृप्तिः तु न अनुभूयते। तस्य कारणं किम् इति ज्ञातुं न शक्नोमि। मम यावत् तृप्तिः न भवति, तावत् एतत् गृहं त्यक्त्वा न गच्छामि। अतः भवान् एतत् स्वीकृत्य गन्तुम् अर्हति'' इति उक्त्वा एकम् अमूल्यं वज्रं कृष्णशर्मणे दत्तवती।

कृष्णशर्मा शिवशर्मणः गृहम् आगत्य उक्तवान्– ''तस्याः अपेक्षया अपि मया उत्तमं गानं कृतम्। अतः सा पिशाची अतृप्ता स्यात्। स्वकीयस्य गानस्य महत्त्वं नास्ति इति खिन्ना स्यात्'' इति।

'एतं दोषम् अहं समीकरोमि' इति वदन् देवशर्मा अनन्तरदिने पिशाच्याः गृहं गतवान्। यदा सः पिशाच्याः गृहं प्राप्तवान्, तदा सा कस्मिंश्चित् रागे लीना आसीत्। तत् श्रुत्वा देवशर्मा– ''भवत्याः गानं शृणोमि चेत्, भवत्या सह स्पर्धितुम् इच्छा भवति'' इति उक्त्वा गातुम् आरब्धवान्।

तस्य गानं पूर्णतः श्रुत्वा सन्तुष्टा पिशाची तस्मै एकम् वज्रं दत्तवती।

वज्रं प्राप्य देवशर्मा पिशाचीम् उक्तवान्– ''एतस्य वज्रस्य विक्रयणेन यत् धनं प्राप्नोमि, तत् एव मम जीवनस्य आधारभूतम्। सङ्गीते मत्समानः कोऽपि नास्ति इति चिन्तितवान् आसम्। किन्तु अहं भवत्या सह स्पर्धितुं न शक्तवान्। इतःपरम् अहं कदापि न गायामि'' इति।

तत् श्रुत्वा पिशाची उक्तवती–

"पण्डितोत्तम, भवतः स्पर्धया अहं सन्तुष्टा अस्मि। किन्तु मम मनसः तृप्तिः न जाता। मम गानश्रवणानन्तरं भवान् इतःपरं गानम् एव न करिष्यामि इति वदन् अस्ति। तेन महान् खेदः भवति मम। कृपया गानं मा त्यजतु" इति।

पिशाचीगृहतः प्रत्यागतस्य देवशर्मणः वृत्तान्तं श्रुत्वा शिवशर्मा उक्तवान्– "एतां पिशाचीं निवारयितुं भवन्तः प्रयाशः न शक्नुवन्ति। भवन्तः कथञ्चित् एतावद्दूरम् आगताः सन्ति। अतः चतुर्थः अपि गच्छतु। तदा सर्वेषां प्रयत्नोऽपि समाप्तः भवति" इति।

अनन्तरदिने रात्रौ विष्णुशर्मा पिशाच्याः गृहं गतवान्। तदा अपि पिशाची गायन्ती आसीत्। सः मौनं पिशाच्याः पुरतः उपविश्य गानं श्रोतुम् आरब्धवान्।

• पिशाची बहुकालं गानम् अकरोत्। विष्णुशर्मा सन्तोषेण उत्साहेन च बहुकालं गानं श्रुतवान्। गानसमाप्त्यनन्तरं पिशाची विष्णुशर्माणं पृष्टवती– "भोः, भवान् कः?" इति।

"विदुषः परिचयार्थं विद्वत्तया एव उत्तरं दत्तं चेत् वरं स्यात् किल!" इति वदन् विष्णुशर्मा गानम् आरब्धवान्।

तस्य गानसमाप्त्यनन्तरं पिशाची– "महापुरुष, बहुकालानन्तरं मम गानस्य तृप्तिकरं प्रतिफलं मया लब्धम्। इतःपरम् अहम् एतत् गृहं त्यक्त्वा गच्छामि। भवतः गानस्य कृते मया दीयमानम् अल्पम् उपायनं



कृपया भवता स्वीकरणीयम्" इति उक्त्वा तस्मै एकम् उत्तमं वस्त्रं दत्त्वा झटिति अदृश्यतां गतवती।

वेतालः एवं कथां समाप्य अवदत्– "राजन्, पिशाची तृप्तिं प्रदर्शयन्ती यत् निर्गतवती तत्र किं कारणम्? प्रतिदिनम् एकैकः सङ्गीतविद्वान् आगत्य तदीये गाने यत् विघ्नम् आचरितवान् तेन खिन्ना सा ततः निर्गतवती वा? हरिशर्मणः पुत्राः सर्वे सङ्गीतक्षेत्रे समानपाण्डित्यवन्तः। किन्तु अग्रजाः त्रयः महता प्रयत्नेन अपि तां तर्पयितुं न शक्तवन्तः। किन्तु कनिष्ठः कथं तां तर्पितवान्? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– "पिशाच्याः व्यवहारे आश्चर्यकरं किमपि नास्ति एव। सङ्गीतज्ञानवान् सहृदयः श्रोता यदा लभ्यते तदा केवलं सङ्गीतविद्वान् तृप्तिं प्राप्नोति। रामशर्मा, कृष्णशर्मा, देवशर्मा च पिशाच्याः गानं प्रशंसितवन्तः, सत्यम्, किन्तु आन्तं न श्रुतवन्तः। समीचीनं गानं यः मध्ये स्थगयति सः श्रेष्ठः सङ्गीतविद्वान् भवितुं न अर्हति। अतः एव तेषां त्रयाणां प्रशंसया गानेन वा सा न तृप्ता। विष्णुशर्मा तु तस्याः गानम् आन्तं श्रुतवान्। विष्णुशर्मणः गानं शृण्वत्या पिशाच्या अपि ज्ञातं यत् तस्य सङ्गीतविद्वत्ता कियत् इति। 'महाविद्वान् कश्चित् मम सङ्गीतम् आन्तं श्रुतवान्' इति तृप्तिं प्राप्तवती पिशाची तत् गृहं परित्यज्य गतवती। एवं स्वयोग्यतया पिशाचीं तर्पितवन्तं, शिवशर्माणं तोषितवन्तं च विष्णुशर्माणम् एव हरिशर्मा अनन्तरकाले पाठितवान् स्यात् इति तर्कयितुम् अपि शक्नुमः वयम्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






# कार्यसाधकः

मत्स्यदेशस्य पार्श्वे एव सौवीरदेशः अपि अस्ति। तयोः देशयोः मैत्री अतिप्राचीना। किन्तु कदाचित् मत्स्यराजः सौवीरराज्यस्य उपरि आक्रमणम् उद्घोषितवान्। एवम् उद्घोषणस्य कारणम् अजानन् सौवीरराजः दिग्भ्रान्तः जातः। सौवीरदेशः मत्स्यदेशस्य अपेक्षया अतीव लघुः। यदि युद्धं प्रचलेत् तर्हि सौवीरदेशस्य पराजयः निश्चितः एव।

एतादृश्यां परिस्थितौ मत्स्यदेशस्य राज्ञा प्रेषितः राजदूतः सौवीरराजस्य आस्थानम् आगत्य उक्तवान्- "महाराज! युद्धकारणतः जनहानिः धनहानिः च भवति इति अस्माकं राजा जानाति। भवान् अस्माकं राज्ञः माण्डलिकः यदि स्यात् तर्हि युद्धं न भवेत्। एतद्विषये भवतः अभिप्रायं ज्ञातुम् इच्छति अस्माकं महाराजः" इति।

एतत् श्रुत्वा सौवीरराजः क्षणकालम् आलोच्य उक्तवान्– "सप्ताहद्वयस्य अवधिम् इच्छामः वयम्। तदभ्यन्तरे अस्मदीयः राजदूतः भवतः राज्ञः आस्थानम् आगत्य अस्मदभिप्रायं निवेदयिष्यति। एतं विषयं भवतः राजानं वदतु" इति।

मत्स्यदेशस्य राजदूतः एतत् उत्तरं प्राप्य निर्गतवान्। अग्रे किं करणीयम् इति अजानन् सौवीरराजः मन्त्रिणम् एतद्विषये पृष्टवान्।

"महाराज! एतस्मिन् विषये चिन्ता करणीया नास्ति। अस्माकम् आस्थानकविं सञ्जयशर्माणं राजदूतरूपेण प्रेषयतु। सः अनुभवी। कः कथं बोधनीयः, कदा च बोधनीयः इति सः सम्यक् जानाति। कार्यं कथं साधनीयम् इत्यपि सः जानाति। तस्य दौत्यं यदि असफलं भवेत् तर्हि अग्रे किं करणीयम् इति आलोचयिष्यामः" इति उक्तवान् मन्त्री।

राजा मन्त्रिणः सूचनां युक्तां मन्यमानः आस्थानकविं सञ्जयशर्माणम् आहूय प्रवृत्तं सर्वं निवेद्य राजदूतरूपेण मत्स्यदेशं प्रति

प्रेषितवान्।

सञ्जयशर्मा विवेकी खलु? सः साक्षात् मत्स्यराजसमीपं न गतवान्। गूढचरान् सम्प्रेष्य तेषां द्वारा मत्स्यदेशस्य परिस्थितिम् आमूलाग्रं ज्ञातवान् सः।

मत्स्यदेशस्य राजा स्वभावतः सज्जनः। स्वयं पण्डितः अपि सः। सौवीरराज्यं स्वायत्तीकरणीयम् इति विचारः तस्य मनसि स्वयं न उत्पन्नः। सौवीरराज्यस्य सस्यसमृद्धिम्, अभिवृद्धिपरतां च दृष्ट्वा ईर्ष्यां प्राप्तवन्तः केचन मत्स्यराजं युद्धार्थं प्रेरितवन्तः आसन्।

एवं प्रेरितवत्सु मत्स्यराजस्य आन्तरङ्गिकेषु त्रयः प्रमुखाः। तेषु धनगुप्तः नाम वणिक् अन्यतमः। अपरः सेनापतिः माधववर्मा। अन्यः मन्त्री सोमशेखरः।

सञ्जयशर्मा गुप्तचरद्वारा एतेषां त्रयाणां स्वभावं परीक्षितवान्। तेन ज्ञातं यत् धनगुप्तः लोभी, माधववर्मा कठिनस्वभावयुक्तः, सोमशेखरः च मूर्खः इति।

एतावत् ज्ञात्वा सञ्जयशर्मा मत्स्यदेशं गत्वा रात्रिसमये धनगुप्तं तदीये गृहे दृष्टवान्। अमूल्यानि वज्रादीनि उपायनरूपेण दत्त्वा– "भवतः वचनं महाराजः पालयति इत्यत्र न आश्चर्यम्। यतः तादृशः श्रेष्ठः भवान्। भवता एकः उपकारः करणीयः। भवतः राजा सौवीरदेशस्य उपरि आक्रमणं यथा न कुर्यात् तथा भवता करणीयम्। उपकृतवन्तं भवन्तं न विस्मरामः वयम्। शक्त्यनुसारम् उपायनं दास्यामः एव। इदानीं



यत् दत्तं तत् तु अल्पम् उपायनम्'' इति उक्तवान्।

प्राप्यमाणस्य उपायनस्य आशया धनगुप्तः सञ्जयशर्मणः वचनम् अङ्गीकृतवान्।

अनन्तरं सञ्जयशर्मा नगरसीमायां स्थिते सेनाशिबिरे निवसन्तं माधववर्माणम् एकान्ते दृष्टवान्। धनगुप्तः इव अयं प्रलोभनया वशीकृतः न भवति इति जानाति सः।

अतः सः माधववर्मणः शौर्यं प्रशंस्य विनयेन पृष्टवान्– ''महानुभाव! अल्पस्य चटकस्य उपरि महतः ब्रह्मास्त्रस्य प्रयोगः किम् उचितः?'' इति।

''युद्धस्य निवारणार्थम् एषः प्रस्तावः वा? यदि धैर्यं स्यात् तर्हि ....'' इति माधववर्मणः वचनम् अर्धे एव स्थगयित्वा विनयेन उक्तवान् सञ्जयशर्मा– ''अस्माकं सामर्थ्यम् अल्पम्। अहं तत् अङ्गीकरोमि। किन्तु अस्माकं राज्यस्य उपरि आक्रमणेन किं प्रयोजनम्? न कीर्तिः, न वा धनलाभः। भवतां राज्यस्य पार्श्वे एव चेदिराजः गर्वेण विलसति। तस्य उपरि आक्रमणं कृतं चेत् कीर्तिः धनं चापि प्रभूतं लभ्येत'' इति। एवं मधुरैः वचनैः माधववर्मणः दृष्टिम् अन्यत्र पातयित्वा मन्त्रिणं द्रष्टुं गतवान् सः।

मन्त्री सोमशेखरः मूर्खः, प्रशंसया सुलभतया वशीभवति इति जानाति सञ्जयशर्मा। अतः सः सायम् उद्याने पत्नी-पुत्रादिभिः सह विहरन्तं मन्त्रिणं दृष्ट्वा उक्तवान्– ''मन्त्रिवर्य! भवत्समानः



लोके अन्यः कः अस्ति? न कोऽपि। भवतः बुद्धिवैभवं सुप्रसिद्धम्। वास्तविकः राजा नाम्ना केवलं राज्यं शास्ति, किन्तु वस्तुतः राज्यशासकः तु भवान् एव। भवतः वचनं तिरस्कर्तुं महाराजः अपि न शक्नोति इति तु सर्वे जानन्ति एव'' इति।

एतया प्रशंसया सन्तुष्टः मन्त्री पृष्टवान्– ''वस्तुतः भवतः आगमनस्य किं प्रयोजनम्?'' इति।

''अल्पं निवेदनं मम। भवतः वचनं राजा न तिरस्करोति खलु? अतः भवता सः वक्तव्यः यत् सौवीरदेशस्य उपरि आक्रमणं मास्तु इति। युद्धं यथा न भवेत् तथा करणीयम्'' इति।

'यदि एतत् असाध्यम् इति वदेयं तर्हि मम पत्नीपुत्रादयः माम् असमर्थं भावयेयुः' इति आलोचितवान् मन्त्री– ''भवता यथा उक्तं तथा करिष्यामि'' इति सञ्जयशर्माणम् उक्तवान्।

'इतः परम् एते त्रयः अपि राजानं युद्धार्थं प्रेरयितुं न अर्हन्ति' इति निश्चित्य सञ्जयशर्मा अनन्तरदिने राजसभायां स्थितं राजानं कविताकौशलेन सन्तोषितवान्।

तस्य काव्यप्रतिभया नितरां सन्तुष्टः मत्स्यराजः तम् उक्तवान्– ''कः भवान्? यत् इच्छति तत् पृच्छतु। दास्यामि'' इति।

तदा सञ्जयशर्मा आत्मनः परिचयं निवेद्य युद्धात् जायमानाम् अनर्थपरम्परां चापि परिणामकारितया निवेद्य– ''शान्तिभिक्षया अनुग्रहणीयः अहम्'' इति प्रार्थितवान्।

राजा एतत् अङ्गीकृत्य 'भवतां युद्धभयं न भविष्यति' इति आश्वासनं दत्त्वा तं सत्कृत्य प्रेषितवान्।

स्वदेशम् आगतं सञ्जयशर्माणं पृष्टवान् राजा– ''भवान् कथम् एतत् साधितवान्?'' इति।

तदा सञ्जयशर्मा हसन् उक्तवान्– ''प्रभो! लोभी धनेन, कठिनहृदयः विनयेन, मूर्खः स्तुत्या, पण्डितः च प्रतिभया जेतव्याः। मया एतत् एव कृतम्'' इति।



# ज्ञानभाण्डागारम्

भारतीयम् अपूर्व मन्दिरम्–

## पद्मनाभस्वामिमन्दिरम्

केरलस्य राजधान्याः त्रिवेन्द्रंनगरस्य वास्तविकं नाम तिरु-अनन्त-पुरम् इति। अनन्तः इति देवस्य नाम। यस्य अन्तः नास्ति सः अनन्तः। भूमिं वहतः सहस्रशिरसः सर्पस्य नाम अपि अनन्तः इत्येव।

एतस्मिन् नगरे स्थितेषु पवित्रमन्दिरेषु विष्णोः आलयः अपि अन्यतमः। अत्रत्यः विष्णुः पद्मनाभस्वामी इत्यपि ख्यातः। अनन्तशयनः इत्यपि प्रसिद्धः अस्ति सः।

अत्रत्या उत्सवमूर्तिः अतिप्राचीना। विष्णोः अयम् आलयः बहुवारं पुनर्निर्मितः इति श्रूयते। इदानीम् एतस्य आलयस्य यत् रूपं दृश्यते तत् त्रिवेन्द्रशासकेन राज्ञा महेन्द्रवर्मणा निर्मितम्। गर्भगृहं परितः सुदीर्घा प्रशाला अस्ति, यस्याम् अर्धचन्द्राकारकतोरणयुक्ताः ३६० स्तम्भाः सन्ति। एतस्य आलयस्य भित्तौ पौराणिकानि चित्राणि उत्कीर्णानि सन्ति। अयम् आलयसमुच्चयः कृष्ण-क्षेत्रपाल-नरसिंह-शास्तृ-गरुडादीनां बहूनां मन्दिरैः समेतः अस्ति।



# क्रीडाजगत् –

'मौण्टन्'नामकं मौटार्सैकल्पर्यटनं अतिदीर्घतमत्वेन प्रसिद्धम्। एतत् Isle of man द्वीपे अस्ति। एतत् ३७.७३ मैल् (६०.७२ कि.मी) दीर्घं, २६४ वक्रताभिः कोणैः च युक्तम् अस्ति।



## अतिदीर्घं पर्यटनम्

विम्बल्डन्,
युनैटेड् स्टेट्स्,
फ्रेञ्च्, आस्ट्रेलियन्, इतं
ब्याट्मिण्टन्स्पर्धासु यः स
प्राप्नोति सः 'ग्राण्ड्स्लम्'
सम्मान्यते। तादृश्या बिल
सर्वप्रथमा अमेरिकामहिल
मौरिन् लिट्ल् मो कोनोलि



## दूरदर्शने ओलम्पिक् प्रथमप्रसारः

दूरदर्शने सर्वप्रथम प्रसारिता ओलम्पिक्स्पर्धा १९३६ तमे वर्षे बर्लिन् इत्यत्र प्रवृत्ता। प्रायः २८ सार्वजनिकदूरदर्शनव्यवस्थायाः साहाय्येन १,५०,००० जनाः एतां स्पर्धां दृष्टवन्तः स्युः इति तर्क्यते।




## स्वसदृशेषु

साम्प्रदायिकशैल्या निर्मि
'ग्राण्ड् प्रिक्स्' कार्य
रेवेण्ट्लोव्वर्यस्य स्कर
वर्षे मोनेको इत्यत्र अ

## कार्यानस्य पक्षौ

१९६८ तमे वर्षे प्रवृत्तायां बेल्जियं ग्राण्ड् प्रिक्स्स्पर्धायां कार्यानेषु पक्षसदृशः भागः सर्वप्रथमं योजितः आसीत्। चक्रयोः उपरि अधोमुखभारस्य स्थापनेन वेगोत्कर्षस्य, दृढगतेः च प्राप्तिः एतस्याः व्यवस्थायाः उद्देशः आसीत्।





## अमेरिकीया 'शै

विनयप्रदर्शनसन्दर्भे इव किञ्
एषा शैली १९ शतके अमे
सर्वप्रथमं प्रदर्शिता।










## महत्तमः वेगः

यन्त्रसाहाय्यं विना मानवशरीरं महत्तमं वेगं तदा एव प्राप्नोति यदा च आकाशात् अवपतनं भवति। विलम्बितया गत्या अवपतनसमये प्रतिघण्टं ६१४ मैल् (988 कि.मी.) वेगः प्राप्तुं शक्यः इत्यत्र प्रमाणम् अस्ति।






## हिमप्रदेशे हाकीक्रीडा



# अपि भवान् जानाति?



धूमकेतोः ६०,००० घनमैल्विस्तृतस्य पुच्छस्य भारस्तु, सामान्यस्य श्वासोच्छ्वासस्य भारः यावत् भवति ततोऽपि नितरां न्यूनः।



अट्लाण्टिक्महासागरे यावच्चमसमितं जलं भवति, तावन्तः एव अणवः भवन्ति चमसमिते जले।



प्रतिवर्षं जगति ५०,००० भूकम्पाः भवन्ति प्रायः। किन्तु तेषु बहवः तावत् सूक्ष्माः भवन्ति यत् ते अनुभवगोचराः न भवन्ति।



सूर्यं परितः परिभ्रमणं कुर्वत्याः भूमेः वेगः प्रतिनिमेषं २९ किलोमीटर्।




इण्डोनेशियादेशः १३,००० द्वीपैः युक्तः अस्ति।



प्राणिषु मानवः केवलम्, उत्तानं शयनं कर्तुं समर्थः।



# नेहरूकथा–९

१९२९ तमे वर्षे झारिया इत्यत्र यः समावेशः प्रवृत्तः तस्यां जवहरलाल् नेहरू ट्रेड् यूनियन् कांग्रेस् अध्यक्षत्वेन निर्वाचितः अभवत्। एवं भारतीयैः कर्मचारिभिः सम्भूय कार्यं कर्तुम् अवकाशं प्राप्तवान् सः।

अनन्तर सः लाहोर्नगरे प्रवृत्ते समावेशे भारीतय राष्ट्रिय कांग्रेस् संस्थायाः अध्यक्षत्वेन निर्वाचितः अभवत्। तदा सः चत्वारिंशद्वर्षीयः। मोतीलालस्य अनन्तरम् इदानीं जवाहरलालः एव अध्यक्षपदम् आरोहतु इति गान्धीजी सूचितवान् आसीत्।





लाहोर्समावेशे एव पठान्नायकः खान् अब्दुल् गफार् खान् सर्वेषां दृष्टिगोचरः जातः। सीमाप्रदेशीयैः अनेकैः युवकैः सह समागत्य समावेशे उत्साहेन भागं वहन् सः सर्वैः अपि विशेषतः लक्षितः।



कांग्रेससंस्थया निर्णीतं यत् १९३० तमवर्षस्य जनवीमानसस्य २६ तमः दिनाङ्कः स्वातन्त्र्यदिनम् इति। तद्दिने राष्ट्रनायकाः– 'देशस्य स्वाातन्त्र्य-सम्पादनम् एव अस्माकम् अद्वितीयं लक्ष्यम्' इति जनान् बोधितवन्तः। असङ्ख्याः जनाः अस्मिन् समावेशे भागम् ऊढवन्तः आसन्।

सर्वकारेण लवणार्थं करः विहितः यत्, तत् विरुध्य सत्याग्रहः करणीयः इति उद्घुष्टवान् गान्धीजी। अहमदाबाद-समीपस्थात् सबरमत्याश्रमात् दण्डीयात्रा आरब्धा। समग्रे देशे एतस्याः यात्रायाः प्रोत्साहः आसीत्।





देशे अनेकेषु स्थलेषु जनाः निषेधाज्ञां धिक्कृत्य समुद्रतीरे, इतरत्र च लवणं निर्मितवन्तः। जवहरलाल् नेहरू अपि पत्न्या कमलया सह लवणसत्याग्रहे भागं गृहीतवान्।

१९३० तमे वर्षे एप्रिल् १४ दिनाङ्के जवहरलाल् यदा रेलयानम् आरोहन् आसीत् तदा सः आरक्षकैः बद्धः। एतेन देशे प्रक्षोभः जातः। सत्याग्रहः च समग्रदेशव्यापी सञ्जातः।





'अहं कारागारे अस्मि इत्यतः गान्धीजी कांग्रेस्संस्थायाः अध्यक्षपदस्य भारं वहति चेत् वरं स्यात्' इति आलोचितवान् जवहरः। किन्तु गान्धीजी एतत् सर्वथा न अङ्गीकुर्यात् इति जानन् सः पितरम् अध्यक्षपदे नियोजितवान्। तेषु दिनेषु मोतीलाल् यद्यपि अस्वस्थः, तथापि एतं कार्यभारं सोत्साहम् अङ्गीकृतवान्।

अनेकेषु नगरेषु विदेशीयानां वस्तूनां बहिष्कारः, असहकारप्रदर्शनप्रयत्नाः च प्रवृत्ताः। स्वस्य अनारोग्यम् अपि अविगणय्य कमला नेहरू तत्र तत्र प्रचलतां सत्याग्रहकार्यक्रमाणां नायकत्वं निरूढवती।





अलहाबाद्नगरस्थं स्वकीयम् आनन्द-भवनं देशाय समर्पणीयम् इति, तस्य नाम 'स्वराज्यभवनम्' इति निश्चेतव्यम् इति च मोतीलाल् निश्चितवान्। भवनस्य अर्धभागः कांग्रेस्कार्याणां निमित्तं, पुनरर्धभागः वैद्यशालारूपेण च तिष्ठेत् इति तस्य आशयः आसीत्।

मोतीलाल् अनारोग्येण पीडितः सन्, मुस्सूरु गन्तुं सन्नाहं कुर्वन् आसीत्। तस्मिन् एव सन्दर्भे उषसि आगताः आरक्षकाः आनन्दभवने एव तं बन्दीकृतवन्तः। यत्र जवहरः आसीत् तत् कारागारं प्रति नीतवन्तः च।





कारागारे वलयाकारेण स्थितया भित्त्या निर्मिते प्रकोष्ठद्वये जवहरः एकाकितया निवसति। सः किञ्चिन्मात्रम् आकाशं द्रष्टुं शक्नोति स्म। स्वातन्त्र्यस्य सङ्केतरूपेण दृश्यमानं तम् आकाशं तदा तदा पश्यन् भवति जवहरः।

—(अनुवर्तते)



# सूक्तिविक्रयणम्

धर्मपालः नाम कश्चित् पूर्वं विचित्रं वाणिज्यं करोति स्म। तस्य आपणे सूक्तीनां विक्रयणं प्रचलति स्म। विविधासु चिटिकासु सः उत्तमाः सूक्तीः, उत्तमानि वचनानि च लिखित्वा स्थापयति स्म। एकस्याः चिटिकायाः मूल्यं शतं रूप्यकाणि। यद्विषयकं वचनं यः इच्छति तद्विषयिकां चिटिकां तस्मै ददाति धर्मपालः। एवं चिटिकां क्रीत्वा गताः बहवः ततः लाभं प्राप्तवन्तः आसन्। अतः धर्मपालस्य कीर्तिः सर्वत्र प्रसृता आसीत्।

कदाचित् कश्चित् वणिक् धर्मपालस्य आपणम् आगतवान्। धनिकः सः त्रिशतं रूप्यकाणि दत्त्वा तिस्रः चिटिकाः क्रीतवान्।

प्रथमचिटिकायां लिखितम् आसीत् यत् पत्न्यै कदापि रहस्यं किमपि न वक्तव्यम् इति। द्वितीयायां लिखितम् आसीत्– "प्रयाणसमये भोजनं करणीयं चेत् मार्गपार्श्वे न, अपि तु दूरे करणीयम्" इति। "अविचार्य केनापि सह स्पर्धार्थम् उद्युक्तेन न भवितव्यम्" इति तृतीयचिटिकायां लिखितम् आसीत्।

एतानि वचनानि यथार्थानि उत न इति परीक्षितुम् इच्छति सः वणिक्। अतः सः एकैकं सहस्रं यावत् नवसु स्यूतेषु नव सहस्रं रूप्यकाणि पूरयित्वा तान् शकटे आरोप्य वाणिज्यार्थं नगरं प्रति प्रस्थितवान्।

मध्याह्नकालः आगतः। भोजनं करणीयं खलु? अतः सः मार्गात् अनतिदूरे स्थितस्य कूपस्य पार्श्वे शकटं स्थगयित्वा शकटात् अवतीर्य भोजनं समापितवान्। पुनः प्रयाणम् अनुवृत्तम्। किञ्चिद्दूरं गमनानन्तरं सः धनस्यूतानां गणनां कृतवान्। अष्ट एव दृष्टाः। नवमः स्यूतः न दृश्यते! सः पुनरपि कूपस्य समीपं गतवान्। तत्र तृणानां मध्ये

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



पतितः धनस्यूतः तेन प्राप्तः। 'मया धनं दत्त्वा यत् वचनं क्रीतं तत् उपकाराय एव अभवत्। यदि मार्गस्य पार्श्वे एव भोजनं कृतं स्यात् तर्हि मदीयः धनस्यूतः एतावता केनापि नीतः स्यात्' इति आलोचितवान् सः।

स्यूतं स्वीकृत्य सः शकटसमीपम् आगतवान्। एवम् आगमनसमये तस्य पादे कस्यचित् फलस्य रसः लग्नः। सः हस्तेन फलरसं मार्जितवान्। आश्चर्यं नाम, एतेन तस्य पादे चिरकालतः स्थितः कश्चन व्रणः समूलम् उन्मूलितः आसीत्। 'एतस्मिन् फले विशेषगुणः कोऽपि अस्ति। अतः प्रतिगमनसमये एतत् फलं नेष्यामि' इति आलोच्य सः कूपस्य पार्श्वे एकत्र तत् फलं निखन्य, उपरि अभिज्ञानार्थं किमपि संस्थाप्य शकटम् आरुह्य प्रयाणम् अनुवर्तितवान्।

नगरे वाणिज्यं सम्यक् प्रवृत्तम्। तेन विशेषलाभः प्राप्तः आसीत्। अतः परमसन्तुष्टः सः कूपपार्श्वे निखातं फलं सर्वथा विस्मृतवान्। अपरेण मार्गेण गृहं प्राप्तवान् सः।

ग्रामम् आगतः सः श्रुतवान् यत् तद्ग्रामीणः लक्षाधीशः घोरेण विद्रधिना पीड्यमानः अस्ति इति। तेन एतदपि श्रुतं यत् वेदनां सोढुम् अशक्तः लक्षाधीशः रोगनिवारकाय दशसहस्रं रूप्यकाणि पारितोषिकरूपेण दास्यामि इति उद्घोषितवान् अस्ति इति। बहवः वैद्याः चिकित्सार्थम् उद्युक्ताः असफलाः जाताः सन्ति इत्यपि सः ज्ञातवान्।

एतत्सर्वं श्रुतवान् सः कूपस्य पार्श्वे निखातं फलं स्मृतवान्। 'तस्य फलस्य रसस्य लेपनेन धनिकस्य विद्रधिः निश्चयेन अपगतः भविष्यति' इति निश्चितवान् सः।

प्राप्यमाणस्य लाभस्य स्वरूपं पुनः पुनः स्मरन् सः आनन्दपरवशः सन् कूपस्य पार्श्वे निखातस्य फलस्य विषये पत्नीं विस्तरेण निवेद्य– ''लाभप्राप्त्यर्थं समीचीनः अवकाशः प्राप्तः अस्ति मया। अयम् अवकाशः हस्तच्युतः यथा न भवेत् तथा कर्तुम् इदानीम् एव लक्षाधीशं पश्यामि। चिकित्सा फलिता चेत् धनं दीयते इति

लिखित्वा दातुं तं सूचयामि। श्वः गत्वा फलम् आनीय चिकित्सां करिष्यामि" इति उक्त्वा स्नानार्थं ततः गतवान्।

तस्य पत्नी सन्तोषातिरेकं सोढुम् अशक्ता प्रतिवेशिनीं सर्वम् उक्तवती। प्रतिवेशिनी तु तत्सर्वं स्वपतिम् उक्तवती।

लक्षाधीशस्य गृहं गच्छन् धनिकः प्रतिवेशिना मिलितः। वार्तालापसन्दर्भे गमनकारणं तं निवेद्य– "तस्य लक्षाधीशस्य विद्रधिः कथं निवारणीयः इति अहम् एकः एव जानामि, न तु अन्यः" इति साभिमानम् उक्तवान् धनिकः।

"विद्रधिनिवारणोपायम् अहम् अपि जानामि" इति हसन् उक्तवान् प्रतिवेशी।

"एवं तु बहवः उक्तवन्तः। किन्तु ते सर्वे असफलाः जाताः" इति उक्तवान् धनिकः।

तदा प्रतिवेशी उक्तवान्– "अन्येषां विषयं त्यजतु। अहं सफलः भवामि इति तु निश्चितम् एव। यदि भवतः सन्देहः स्यात् तर्हि पणं निश्चिनोतु" इति।

इदानीं तूष्णीं स्थातुम् अशक्तः धनिकः प्रतिवेशिनम् उक्तवान्– "यदि भवान् लक्षाधीशस्य विद्रधिं दूरीकर्तुं शक्नुयात् तर्हि मद्गृहे भवान् यत् स्पृशति तत् दास्यामि" इति।

प्रतिवेशी तु तत्क्षणे एव कूपसमीपं गत्वा धनिकेन निखातं औषधफलं स्वीकृत्य लक्षाधीशस्य गृहं गत्वा फलरसलेपनपूर्वकं विद्रधिं दूरीकृतवान्। पारितोषिकं चापि प्राप्तवान्।



केनापि कारणेन निश्चिते समये गृहात् प्रस्थातुं न शक्तवान् धनिकः। तावता प्रतिवेशिना पारितोषिकं प्राप्तम् आसीत्। 'इतः परं मम का गतिः? प्रतिवेशी मम गृहम् आगत्य अयःपेटिकां स्पृशेत्। तत्र तु मदीया समग्रा सम्पत्तिः अस्ति। चिटिकायां यत् लिखितं तत् न पालितवान् अहम्। तत्र लिखितं विस्मृत्य रहस्यं पत्नीं निवेदितवान्। विना कारणं प्रतिवेशिना सह स्पर्धाम् अपि कृतवान्। अहो मूर्खता मम!' इति बहुधा विलापं कृतवान् सः।

ततः सः साक्षात् धर्मपालस्य आपणं गत्वा, साष्टाङ्गं नमस्कृत्य, प्रवृत्तं सर्वं निवेद्य, आत्मनः मूर्खतार्थं पश्चात्तापम् अपि प्रकट्य– ''इदानीं कमपि उपायं सूचयतु कृपया'' इति प्रार्थितवान्।

तदा धर्मपालः उक्तवान्– ''गते, शोकः न कर्तव्यः। अयःपेटिकाम् अट्टे स्थापयतु। अट्टं प्रति गमनार्थम् एकां निश्रेणीम् अपि स्थापयतु। अहं तत्र आगत्य यत् उचितं तत् करिष्यामि'' इति।

प्रतिवेशी पणधनं वशीकर्तुम् इच्छन् त्रिचतुरैः साक्षिपुरुषैः सह धनिकस्य गृहम् आगतवान्। गृहं प्रविश्य सः इतस्ततः दृष्टिं प्रसारितवान्। तत्र कुत्रापि धनपेटिका न दृष्टा। 'धनपेटिका अट्टे स्थापिता स्यात् एतेन' इति आलोच्य निश्रेणीं गृहीत्वा अट्टम् आरोढुम् उद्युक्तः सः।

तदा धर्मपालः धनिकम् उक्तवान्– ''मित्रवर्य! भवत्प्रतिवेशी निश्रेणीं स्पृष्टवान्। पणनियमस्य अनुगुणं भवता सा निश्रेणी तस्मै दातव्या। अतः सः तां नयतु नाम'' इति।

किन्तु प्रतिवेशी एतस्य विरोधं प्रकटितवान्। तदा धर्मपालः 'पणस्य आशयः अयम् एव' इति प्रतिपादितवान्। तत्र सम्मिलिताः अत्र सहमतिं प्रदर्शितवन्तः। प्रतिवेशी अनिवार्यतया एतत् अङ्गीकृतवान्।

धनिकः पारितोषिकप्राप्तितः बञ्चितः जातः चेदपि गृहस्य सम्पत्तेः रक्षणे तु समर्थः जातः।






अनिरुद्धस्य चित्रं निर्निमेषं पश्यन्ती अस्ति उषा। तस्याः समग्रं शरीरं पुलकितं दृश्यते। मुखं रागरञ्जितम् अस्ति। एतत् सर्वं दृष्ट्वा हसन्ती चित्ररेखा उक्तवती – "भवत्या स्वप्ने दृष्टः कः इति ज्ञातं मया। सः इदानीं यत्रकुत्रापि वा भवतु, तम् आनीय भवत्याः पार्श्वे उपवेशयामि। तावता मम कर्तव्यं समाप्तं भविष्यति। अनन्तरं यत् उचितं तत् कर्तुम् अर्हति भवती" इति।

तदा उषादेवी चित्ररेखाम् उक्तवती – "प्रियसखि! भवत्याः चातुर्यम् अपूर्वम् एव। एतत् चित्रं दृष्ट्वा अहं स्वप्ने यद्यत् दृष्टवती तत्सर्वं यथास्थितं स्मरामि। एतस्य वंशः कः? एतस्य पिता कः? किं नाम एतस्य? एषः किं करोति? इत्यादिकं ज्ञातुम् इच्छामि अहम्। भवती जानाति चेत् कृपया सर्वं वदतु" इति

"सखि! द्वारकानगरे निवसतः कृष्णस्य नाम श्रुतवती खलु भवती? शिवस्य तृतीयनेत्रेण दग्धः मन्मथः कृष्णस्य पुत्रः सन् प्रद्युम्ननाम्ना प्रसिद्धः जातः। तस्य प्रद्युम्नस्य पुत्रः एव अयम्। अनिरुद्धः इति एतस्य नाम। एतस्य शौर्यं जगत्प्रसिद्धम्। एतं भवती यदि पतिरूपेण प्राप्नुयात् तर्हि भवत्या महत् सौभाग्यं सम्पादितं भवेत्। अस्माकं नगरं शोणपुरं यथा अन्यप्रवेशानर्हं तथैव द्वारका अपि अन्येन प्रवेष्टुम् अशक्या एव। तथापि अहं केनापि उपायेन द्वारकानगरीं प्रविशामि। भवत्याः मनः चोरितवन्तं तम् अनिरुद्धं कथमपि अत्र आनेष्यामि। पार्वतीदेव्याः अनुग्रहेण सर्वं विना विघ्नं प्रचलिष्यति इति



अहं भावयामि" इति उक्तवती चित्ररेखा।

"भवती यदि मनः कुर्यात् तर्हि किं वा असाध्यम्? योगविद्यायां परिणता भवती। कामरूपप्राप्तौ, कामगमने च भवत्याः सामर्थ्यम् अस्ति। तस्य अनिरुद्धस्य मुखदर्शनं सम्पर्कं च विना अहं जीवितुम् एव न शक्नोमि। एतावता एव सप्त दिनानि अतीतानि। विरहतापेन नितरां तप्यमाना अस्मि अहम्। अविलम्बेन तम् अत्र आनीय भवती मम प्राणान् रक्षतु" इति उक्तवती उषा।

चित्ररेखा उषां प्रीत्या आलिङ्ग्य– "सखि! भवती अन्याभिः सखीभिः सह तिष्ठन्ती मनोविनोदं सम्पादयतु" इति उक्त्वा ताम् अन्यत्र प्रेषयित्वा, स्वयम् अदृश्यरूपेण आकाशमार्गेण गतवती।

सा मनोवेगेन क्षणमात्रेण द्वारकां प्राप्तवती। अग्रे किं करणीयम् इति आलोचयन्ती सा तत्र कासारस्य पार्श्वे नारदं दृष्टवती। सा तस्य समीपं गत्वा नमस्कारं कृतवती।

नारदः चित्ररेखाम् आशिषा अनुगृह्य हसन् पृष्टवान् – "केन कारणेन अत्र आगतवती भवती?" इति।

चित्ररेखा पार्वतीदेव्याः वचनं, उषायाः स्वप्ने जातम् अनिरुद्धदर्शनं च नारदं निवेद्य 'अनिरुद्धस्य नयनार्थम् एव अहम् आगता अस्मि' इत्यपि निवेद्य – "अनिरुद्धं यदि अहं मया सह नयेयं तर्हि बाणासुरः क्रुद्धः सन् एतस्य उपरि आक्रमणं कुर्यात्। अतः भवता अयं विषयः कृष्णं प्रति वक्तव्यः। 'यदि बाणासुर-कृष्णयोः युद्धं भवेत् तर्हि जयः तु कृष्णस्य एव। तत्र सन्देहः एव नास्ति । मम अन्योऽपि आतङ्कः नाम यद्यहम् अनिरुद्धं मया सह नयेयं तर्हि कृष्णः मां शपेत् इति। मम अयम् आतङ्कः कृपया निवारणीयः भवता। उषायाः मनोरथस्य पूरणे कृपया साहाय्यं करणीयम्" इति प्रार्थितवती।

नारदः चित्ररेखां 'तामसी' नामिकां विद्याम् उपदिश्य एतस्याः विद्यायाः साहाय्येन भवत्याः कार्यं सफलं भविष्यति। अनिरुद्धस्य नयनानन्तरं युद्धं तु भविष्यति एव। अहं तत्र

आगत्य युद्धं स्थगयिष्यामि। भवती स्वकार्यम् अनुवर्तयतु'' इति उक्त्वा पुनरपि आशिषा अनुगृह्य ततः निर्गतवान्।

चित्ररेखा अदृश्यरूपेण द्वारकां प्रविष्टवती। कृष्णस्य, प्रद्युम्नस्य च भवनम् अतिक्रम्य सा अनिरुद्धस्य भवनं प्रविष्टवती। अनिरुद्धः स्त्रीभिः आवृतः सन् सुवर्णचषकेण मधु पिबन् आसीत्। ताः स्त्रियः तस्य मनसः रञ्जनार्थं विविधानि नृत्यानि प्रदर्शयन्त्यः आसन्।

चित्ररेखा अनिरद्धं परीक्षादृष्ट्या दृष्टवती। तस्य मनः अन्यासक्तम् इव दृश्यते स्म। तस्य हासे सहजता न दृश्यते स्म। कथनसमये स्वरः गद्गदः भवति स्म। काऽपि चेष्टा तेन मनःपूर्वकं क्रियमाणा न आसीत्। 'किमर्थम् एवम्?प्रायः एतेन स्वप्ने उषा दृष्टा स्यात्। अतः एव एवम् अस्वस्थः स्यात् अयम्। एतस्य मनसः तोषार्थम् एताः एवं प्रयत्नं कुर्वत्यः स्युः। एतस्य मनः आक्रष्टुं का वा शक्नुयात्, ऋते उषायाः? पार्वत्याः अनुग्रहेण सर्वं सुसम्पन्नं भवेत्' इति आलोचितवती उषा।

अनन्तरं सा अनिरुद्धेन सह एकान्ते सम्भाषणं कर्तुम् इच्छन्ती नारदेन उपदिष्टायाः विद्यायाः साहाय्येन तत्रत्याः स्त्रियः मूर्च्छां गमितवती। अनन्तरम् अनिरुद्धस्य पुरतः प्रत्यक्षीभूय करौ योजयित्वा उक्तवती– ''महानुभाव! पार्वतीदेव्याः अनुग्रहेण बलिमहाराजस्य पुत्रेण बाणेन एका पुत्री प्राप्ता अस्ति। तस्याः





नाम उषादेवी इति। परमसुन्दर्याः तस्याः सौन्दर्यं वर्णयितुं ब्रह्मा अपि न शक्नुयात्! किमुत अल्पायाः मम कथा! सा उषा कदाचित् स्वप्ने भवन्तं दृष्टवती। ततः आरभ्य भवन्तम् एव ध्यायन्ती अस्ति सा! भवन्तं परिणीय भवतः सेवा करणीया इति तस्याः इच्छा। अहं तस्याः प्रियसखी। चित्ररेखा इति मम नाम। यदि भवान् अङ्गीकुर्यात् तर्हि भवन्तं तस्याः समीपं नेतुम् आगता अस्मि अहम्। भवतोः परस्परयोः जन्म परस्परयोः निमित्तम् एव इति अहं भावयामि। स्वप्ने अनुरूपस्य भवतः दर्शनं भविष्यति इति पूर्वम् एव पार्वतीदेव्या उषा सूचिता आसीत्। अहं भवदीयं चित्रं निर्माय तस्यै दत्त्वा कथञ्चित् तस्याः सान्त्वनं कृतवती अस्मि। अन्यथा तस्याः अवस्था शोचनीया अभविष्यत्। विरहतप्ता सा भवता रक्षणीया। नमस्कारपूर्वकं प्रार्थयन्ती अस्मि अहम्'' इति।

तदा अनिरुद्धः हर्षेण आश्चर्येण च चित्ररेखाम् उक्तवान्– ''एवं वा कथा? मम दशां किमिति वर्णयामि? तया स्वप्ने यथा अहं दृष्टः तथा मया अपि स्वप्ने सा दृष्टा। ततः आरभ्य अहं दिनरात्र्योः भेदम् एव ज्ञातुं न शक्नोमि। निद्रा मत्तः दूरं गता अस्ति। दिशः शून्याः जाताः सन्ति। क्षणाः च युगायन्ते। भवत्याः दर्शनं मया यदि प्राप्तं न स्यात् तर्हि अहं मतिभ्रष्टः भवेयम्। भवती एवं मां किमपि मा प्रार्थयतु। भवत्या आदेष्टव्यः अहम्। भवती यथा वदति तथा करोमि अहम्। माम् उषायाः समीपं नयतु। मां नेतुं यदि भवत्याः सामर्थ्यं स्यात् तर्हि मम भाग्यं फलितम् इति अहं भावयामि। मम प्राणानां रक्षणार्थम् एव आगता अस्ति भवती'' इति।

एतानि वचनानि श्रुत्वा चित्ररेखा अतीव सन्तुष्टा। सा हस्तं गृहीत्वा अनिरुद्धं आकाशमार्गं नीतवती। नारदेन उपदिष्टायाः विद्यायाः साहाय्येन तम् अदृश्यरूपिणं कृतवती आसीत् सा। अनन्तरक्षणे तौ शोणपुरे उषादेव्याः अन्तःपुरे अवतरणं कृतवन्तौ।

अनन्तरं यत् प्रवृत्तं तत् किमिति वर्णयेम? उषा अनिरुद्धः च अभिमुखं स्थित्वा निर्निमेषं

परस्परं पश्यतः। तयोः मुखतः वचनानि न निस्सरन्ति। आनन्दातिशयेन परवशीकृतौ तौ।

"उषादेवि! भवत्याः प्रियकरम् आनयन्त्या मया मम वचनं पालितम्। हस्तं प्रसारयतु। पाणिग्रहणं प्रचलतु नाम। गान्धर्वविवाहः राजकुलीयानां शोभते। स च शास्त्रसम्मतः अपि। अन्यच्च भवतोः विषये पार्वतीदेव्याः अनुग्रहः अपि अस्ति एव। अतः भवन्तौ दम्पती भवताम्" इति वदन्ती चित्ररेखा उषायै नूतनवस्त्राणि, मालाः, आभरणानि, मङ्गलद्रव्याणि च सज्जीकृतवती। गान्धर्वविधिना उषानिरुद्धयोः विवाहः सम्पन्नः।

अनन्तरं तौ कानिचन दिनानि सुखेन यापितवन्तौ। तावता एतत् रहस्यम् अन्तःपुररक्षकैः ज्ञातम्। ते एतं विषयं बाणं निवेदितवन्तः। 'मानवमात्रं कश्चित् मम ख्यातिं, पराक्रमं च तृणीकृत्य अन्तःपुरं प्रविश्य प्रीतिपात्रपुत्र्या सह निवसति वा? कियत् औद्धत्यं तस्य! राक्षसजातेः बलिवंशस्य च अपमाननाय एतत्' इति आलोच्य बाणः कोपेन ज्वलन् शूरान् भटान् आज्ञापितवान्– "भवन्तः गत्वा सः दुष्टः पलायनं यथा न कुर्यात् तथा तं गृह्णन्तु। मां धिक्कृत्य देवाः अपि जीवितुं न अर्हन्ति, किमुत कश्चन मानवः?" इति।

तत्क्षणे एव सहस्रशः राक्षसभटाः खड्ग-शूल-धनुर्बाणादिकं स्वीकृत्य अन्तःपुरस्य उपरि आक्रमणं कृतवन्तः।





सैनिकानां कोलाहलं श्रुत्वा अनिरुद्धः चन्द्रशालाम् आगतवान्। भवनं परितः गर्जतः राक्षसभटान् दृष्ट्वा सोऽपि सिंहनादं कुर्वन् युद्धार्थं सिद्धः जातः।

तदा उषा महान्तं खेदम् अनुभवन्ती– "हा हन्त! कन्यया कयाचित् यत् न करणीयं तत् कृतं मया। अहं कुलकलङ्किनी जाता। लोकत्रयस्य शासकस्य पितुः वैरं सम्पादितं मया। कोमलकायं राजकुमारम् अपि कष्टे पातितवती अहम्। कीदृशम् अकार्यं कृतं मया! देवताः! मां कृपया अपायात् रक्षन्तु" इति प्रार्थितवती।

तदा अनिरुद्धः ताम् उक्तवान्– "अये मूर्खे! मम पराक्रमं सम्यक् न जानाति भवती। अतः एवं परितापः भवत्याः। भवत्या किमपि आकार्यं न कृतम्। चिन्तां मा करोतु। वातायनद्वारा मम पराक्रमं पश्यन्ती तिष्ठतु भवती। एतान् सैनिकान्, भवत्याः पितरं चापि लीलया जेष्यामि अहम्। सः रुद्रः एव प्रमथादिगणेन सह आगतः चेदपि मम भीतिः नास्ति। कृष्णस्य पौत्रं मां जेतुं न कोऽपि समर्थः। शत्रून् मुष्ट्या निपीड्य रक्तं वाहयन् शोणपुरं सार्थकनामकं करिष्यामि। मम वास्तविकं स्वरूपं पश्यतु तावत्। अहं वीरस्य पत्नी अस्मि इति अभिमानं प्राप्नोतु" इति।

अनन्तरं सः अन्तःपुरद्वारसमीपे स्थितं परिघम् उन्नीय लीलया चालयन् राक्षसान् सम्मुखीकृतवान्। नारदः आकाशे तिष्ठन् एतत्सर्वं कुतूहलेन पश्यति।

राक्षसाः स्वसमीपे स्थितानि बाण-शूल-गदादीनि सर्वाणि आयुधानि प्रयुक्तवन्तः। अनिरुद्धः तु एतत् आक्रमणं तृणाय मन्यमानः वलयाकारेण परिघं चालयन् प्रत्याक्रमणं कृत्वा राक्षसान् मारितवान्। विष्णुचक्रम् एव स्वयं रणरङ्गम् आगतम् इव दृश्यते स्म। कांश्चन राक्षसान् सः मुष्ट्या मारितवान्। केचन तस्य पादाघातेन एव मृताः। पुनः केचन पलायनं कृतवन्तः। ये सजीवं स्थातुं शक्तवन्तः तादृशेषु केचन बाणस्य पुरतः शिरः अवनमय्य स्थितवन्तः। बाणः तान् कटुवचनैः सम्यक् निन्दितवान्। 'भवन्तः राक्षसकुलकलङ्काः' इति भर्त्सितवान्।

"विजयवधूं शत्रवे अर्पयित्वा

प्राणरक्षणार्थं पलाय्य आगत्य निर्लज्जं मम पुरतः स्थितवन्तः खलु भवन्तः! भवतां शौर्यपराक्रमादयः कुत्र गताः? कथं लुप्ताः ते? पूर्वम् अहं येषां भवतां साहाय्येन लोकत्रयं जितवान् आसं, ते एव भवन्तः इदानीं माम् एवम् अपमानितवन्तः! धिक् भवतः। शत्रुः कथमपि नाशनीयः एव। अन्यथा राक्षसकुलीयाः शिरः उन्नेतुं न शक्नुयुः। भवद्भिः सह रथगजतुरगान् सैनिकान् च पुनः प्रेषयामि। तैः सह गत्वा विजयं सम्पाद्य आगच्छन्तु'' इति उक्त्वा बाणः शूरान् कालकेयान् तैः सह प्रेषितवान्। ते राक्षसाः भूम्याकाशादिकं सर्वं व्याप्नुवन्तः पुनः अपि आक्रमणं कृतवन्तः।

एवम् आगच्छतः सैनिकान् दृष्ट्वा अनिरुद्धः अपि द्विगुणितम् उत्साहं प्राप्य खड्गं खेटकं च स्वीकृत्य प्रत्याक्रमणं कृतवान्। खड्गेन राक्षसान् तृणानि इव कर्तितवान्। राक्षसाः सहस्रशः! अनिरुद्धः तु एकाकी! तथापि युद्धे अनिरुद्धस्य एव प्राबल्यं दृश्यते स्म। नारदः एतत् युद्धम् आश्चर्येण पश्यति! इतः पूर्वं तेन बहूनि युद्धानि दृष्टानि आसन्। किन्तु एतादृशम् अपूर्वं युद्धं तु सर्वथा अदृष्टपूर्वम्।

बाणेन प्रेषितेषु राक्षसेषु अनेके मृताः। अन्ये केचन दिग्भ्रान्त्या गच्छन्तः अश्वानां गजानां च पादाघातेन मृताः अभवन्। पलायनरतान् बहून् अनधाव्य मारितवान् अनिरुद्धः।

अनिरुद्धस्य आक्रमणात् सर्वथा नष्टं सैन्यबलं, पराजयं प्राप्य प्रत्यागतान् वीरान् सेनानायकान् च दृष्टवतः बाणस्य हृदये अपि कश्चन भीतियुक्तः आतङ्कः! 'इन्द्रादयः मम आयुधैः व्रणिताः सन्तः पलायनं कृतवन्तः आसन्। ते इदानीम् अपि मम नाम्नः श्रवणात् एव कम्पमानाः भवन्ति। तादृशं मां कश्चन मानवबालः जेतुम् उद्युक्तः। इतः परम् अपि यद्यहं मौनं तिष्ठेयं तर्हि परिस्थितिः शोचनीया स्यात्' इति आलोच्य बाणासुरः स्वयं युद्धार्थं प्रस्थितवान्।





# अहो! ख्यातिः

रामपुरनामके ग्रामे पूर्वं रविदासः नाम कश्चन वैद्यः आसीत्। तस्मिन् ग्रामे तेन यशः प्राप्तुं न शक्तम्। अतः सः तं ग्रामं परित्यज्य नगरं गतवान्। तत्रैव वृत्तिम् आरब्धवान् च।

किन्तु नगरे अपि तेन वैद्यवृत्त्या प्रसिद्धिं प्राप्तुं न शक्तम्। एतेन खिन्नः सह वैद्यवृत्तिं परित्यज्य वाणिज्यम् आरब्धवान्। वाणिज्ये तेन लाभः अपि प्राप्तः। अतः सः वैद्यवृत्तिं पूर्णतः परित्यज्य वाणिज्ये एव लीनः जातः। जनाः अपि तम् इदानीं वणिग्रूपेण एव अभिजानन्ति, न तु वैद्यरूपेण।

एवम् एव कानिचन वर्षाणि अतीतानि। कदाचित् रविदासः कार्यविशेषस्य निमित्तं समीपस्थं ग्रामं प्रति प्रस्थितवान्। नगरसीमायाः अनन्तरं निर्जने प्रदेशे केचन चोराः अकस्मात् आक्रमणं कृत्वा रविदाससमीपे यद्यत् अस्ति तत्सर्वं वशीकृतवन्तः। तदीयानि उत्तमानि वस्त्राणि अपि बलात् स्वीकृत्य मलिनम् एकं लघुवस्त्रं तस्मै दत्त्वा ते ततः पलायितवन्तः।

खेदम् अनुभवन् रविदासः चोरैः दत्तं मलिनं वस्त्रम् अधोवस्त्ररूपेण धृत्वा लज्जया समीपस्थं ग्रामं प्रविष्टवान्। तत्र परिचितः कोऽपि नास्ति। किन्तु यदुद्देशेन आगतं तत् कार्यं साधयितुं स्वग्रामं प्रतिगन्तुं च धनम् आवश्यकं खलु?

अनन्यगतिकः रविदासः कस्यचित् वणिजः समीपं गत्वा सधैर्यं प्रार्थितवान्– "श्रीमन्! भवान् इव अहम् अपि कश्चित् वणिक्। एतस्मिन् ग्रामे विनूतनः तण्डुलः लभ्यते इति श्रुत्वा आगतवान्। किन्तु मध्ये मार्गं चोराः आक्रम्य सर्वं वशीकृतवन्तः। एषा दुर्गतिः आगता मम। वणिजः मम नगरे काचित् प्रसिद्धिः अस्ति। तण्डुलक्रयणार्थं कृपया

धनसाहाय्यं करोतु इति प्रार्थयामि। अनन्तरं भवान् मया सह नगरम् आगच्छतु। द्विगुणितं प्रतिफलं दास्यामि भवते" इति।

तदा सः वणिक् पृष्टवान्– "अज्ञातकुलगोत्राय भवते कथं वा धनं दातुं शक्येत? नगरे ममापि केषाञ्चित् वणिजां परिचयः अस्ति। भवतः किं नाम?" इति।

रविदासः स्वनाम उक्तवान्। तदा सः वणिक् उक्तवान्– "रविदासनामकस्य वणिजः नाम न श्रुतम् एव खलु मया?" इति।

"श्रीमन्! पुनः स्मरतु। मां भवान् साक्षात् न दृष्टवान् चेदपि अन्यद्वारा श्रुतवान् स्यात् एव। यतः ममापि काचित् प्रसिद्धिः अस्ति एव नगरे। अहं प्राचीनः वणिक् न चेदपि अपरिचितः तु सर्वथा न" इति उक्तवान् रविदासः।

वणिक् क्षणकालस्य अनन्तरं किमपि स्मरन् उक्तवान्– "रविदासः इति नाम श्रुतं मया। किन्तु तत् नगरे न, अपि तु रामपुरे। हाँ, तत्रैव। रामपुरे सर्वे रविदासस्य नाम उदाहरन्ति स्म। किन्तु, सः वैद्यः आसीत्, न तु वणिक्। केभ्यश्चित् वर्षेभ्यः पूर्वं सः नगरं गतवान् इति श्रुतम्" इति।

तदा रविदासः पृष्टवान्– "श्रीमन्! सः रविदासः अहम् एव। रामपुरे अहं वैद्यवृत्त्या कानिचन वर्षाणि स्थितवान्। किन्तु तया वृत्त्या लाभः तु न प्राप्तः। अतः तां वृत्तिं परित्यज्य नगरे वाणिज्यम् आरब्धवान्। एतत्सर्वं बहुपूर्वं प्रवृत्तम्। इदानीं तु अहं वैद्यकीयविद्यां विस्मृतवान् इव। एवं स्थिते



रामपुरीयाः माम् इतोऽपि स्मरन्ति इति तु आश्चर्यकरम् एव। भवान् कदा रामपुरं प्रति गतवान् आसीत्?'' इति।

''एषु दिनेषु मम भगिन्याः विवाहः प्रवृत्तः। तस्याः पतिगृहं रामपुरे एव अस्ति। तां प्रापयितुम् अहं गतमासे गतवान् आसम्। प्रतिगृहं भवतः नाम एव श्रूयते। तादृशः भवान् वैद्यवृत्तिं परित्यक्तवान् इति तु खेदावहः विषयः'' इति उक्तवान् सः वणिक्।

वस्तुतः रामपुरं गत्वा प्रत्यागतः सः वणिक् रविदासस्य दर्शने कुतूहली आसीत्। इदानीम् अनायासेन तस्य दर्शनं प्राप्तम् इत्यतः सः नितरां सन्तुष्टः। रविदासम् अन्तः आहूय उत्तमानि वस्त्राणि धारणार्थं दत्तवान्। विशेषतः तं सत्कृत्य तेन यावत् धनं पृष्टं तावत् दत्तवान् चापि।

अनन्तरं सः रविदासेन सह नगरम् अपि गतवान्। आत्मना तात्कालिकऋणरूपेण दत्तं धनं प्रतिस्वीकृत्य ग्रामं प्रत्यागतवान् च।

रविदासः पत्नीं प्रवृत्तं सर्वं निवेद्य– ''रामपुरं परित्यजता मया दोषः कृतः इति भाति। तत्र मम प्रसिद्धिः विशेषतः अस्ति इति श्रूयते। आयः न्यूनः अत्र इति वदन्ती भवती बलात् मां नगरम् आनीतवती। नगरप्राप्तेः अनन्तरम् एकवारम् अपि रामपुरं गन्तुम् अवकाशं न कल्पितवती। तत्र श्रूयमाणां मम ख्यातिं श्रुतवतः मम पुनरपि तत्रैव वासः करणीयः इति इच्छा भवति। सद्यः एव सपरिवारं कानिचन दिनानि तत्र स्थित्वा आगच्छामि इति चिन्तितवान् अस्मि'' इति



उक्तवान्।

तदा पत्नी उक्तवती– "भवतः नाम सर्वत्र विलसति इति मया पूर्वम् एव ज्ञातम् आसीत्। किन्तु अस्माभिः पुनः कदापि तत्र न गन्तव्यम्। मम वचनं मा तिरस्करोतु कृपया। इतः परम् अयं विषयः पुनः न प्रस्तोतव्यः अपि" इति।

तदा रविदासः कोपेन– "एतावत्पर्यन्तं भवत्याः वचनस्य विरोधः न कृतः। किन्तु एतत्सन्दर्भे तु विरोद्धव्यम् एव आपतितम्। मम ख्यातिं जानती अपि भवती किमर्थं मां न उक्तवती? किं मम प्रसिद्धिं न इच्छति भवती? केवलं धनदृष्टिः भवत्याः" इति उक्तवान्।

तदा रविदासस्य पत्नी खेदयुक्तेन स्वरेण उक्तवती– "रामपुरे कीदृशी ख्यातिः अस्ति इति भवान् न जानाति। अतः एवं वदति। तत्र सर्वथा अपख्यातिः अस्ति भवतः। चिकित्सां भवान् सर्वथा न जानाति इति वदन्ति स्म जनाः। भवता दीयमानम् औषधं विषतुल्यम् इति वदन्ति स्म ते। यदि कोऽपि कस्यापि विषये कुपितः स्यात् तर्हि सः कोपसमये वदति– 'रविदासतः एतस्मै औषधम् आनीय दातव्यम्' इति। मातरः कदाचित् पुत्रान् भाययन्ति– 'अभक्ष्यं भक्षयन् अस्ति वा? रविदाससमीपं नेष्यामि, पश्यतु। पशोः इव भवतः चिकित्सां करिष्यति सः' इति। एवं प्रतिदिनं भवतः अपख्यातिं सर्वत्र शृणोमि स्म अहम्। तदा मम कीदृशः खेदः जातः स्यात्? अतः एव नगरं गच्छाम इति भवन्तम् उक्त्वा नगरे वाणिज्यार्थं प्रेरितवती। वस्तुस्थितेः ज्ञानेन भवतः खेदः स्यात् इति अद्यावधि न उक्तम् आसीत्। इदानीं तु भवान् अन्यथा गृह्णन् आसीत्। अतः सर्वम् उक्तवती। एतावतां वर्षाणाम् अनन्तरम् अपि रामपुरे भवतः नाम सर्वत्र विलसति इति श्रूयते। अहो दौर्भाग्यम्!" इति।

पत्नीमुखात् वस्तुस्थितिं ज्ञात्वा लज्जितः रविदासः रामपुरं प्रति गमनस्य प्रस्तावं पुनः कदापि न कृतवान्। उपकृतवतः तस्य वणिजः समीपम् अपि सः न गतवान्।





# गोपितं मरणशासनम्

(गतसञ्चिकातः अनुवृत्ता)

गच्छता कालेन षान् षू चतर्दशवर्षीयः जातः। एकदा सः मातरम् उक्तवान्— "मातः! मह्यं कौशेयवस्त्राणि आवश्यकानि" इति।

"धनं नास्ति खलु पुत्र!" इति खेदं प्रकटितवती माता।

"मम पिता राजप्रतिनिधिः आसीत् इति श्रूयते। तस्य आवां द्वावेव पुत्रौ। अग्रजस्य समीपे तु प्रभूतं धनम् अस्ति। मम कुतो न स्यात्? अहम् अग्रजम् एव एतद्विषये पृच्छामि" इति उक्तवान् षान् षू।

"तथा तु मा करोतु पुत्र!" इति उक्तवती माता। किन्तु षान् षू, माता यथा न जानीयात् तथा अग्रजस्य समीपं गत्वा उक्तवान्— "मम पिता तु प्रजाप्रतिनिधिस्थानम् अलङ्करोति स्म। तादृशस्य पुत्रं मां सामान्यवस्त्रं धृतवन्तं दृष्ट्वा सर्वे हसन्ति। अतः मह्यं किञ्चित् कौशेयवस्त्रं दापयतु। अहं नूतनं वस्त्रं धर्तुम् इच्छामि" इति।

"नूतनं वस्त्रम् आवश्यकं चेत् मातरं पृच्छतु, न तु माम्" इति उक्तवान् षान् ची।

"पित्रा दत्तानां क्षेत्रादीनाम् अवेक्षकः भवान् एव खलु?" इति पृष्टवान् षान् षू।

"तन्नाम पित्रार्जितसम्पत्तौ भागम् इच्छति भवान्! एतावत् औद्धत्यं वा भवतः? निर्गच्छतु इतः" इति वदन् कोपेन तं ताडयित्वा प्रेषितवान् षान् ची।

रोदनं कुर्वन् गृहम् आगतः षान्-षू प्रवृत्तं समग्रं मातरं निवेदितवान्।

"तत्र मा गच्छतु इति उक्तवती आसम् अहम्। तथापि मम वचनम् उपेक्ष्य तत्र गत्वा ताडनं प्राप्य आगतः खलु भवान्!" इति वदन्ती सा रुदती अश्रुभिः पुत्रस्य शिरः आर्द्रीकृतवती।

"चीनादेशीया जानपदकथा"



च तस्मै दास्यामि। पित्रा मम शिरसि यः भारः निक्षिप्तः तस्मात् मुक्तः भविष्यामि। भवन्तः एव मम प्रामाणिकतायाः साक्षिणः'' इति वदन् पित्रा दत्तं पुस्तकं प्रदर्शितवान्।

षान् ची वचनं सर्वे विना बिरोधम् अङ्गीकृतवन्तः। षान् ची व्यवहारः अन्याय्यः इति तेषु केचन यद्यपि भावितवन्तः, तथापि बिरोधवचनं तु न उक्तवन्तः। ''पित्रार्जितं यावत् प्राप्यते तावता एव जीवने उन्नतिः सेत्स्यति इति नास्ति। अकिञ्चनाः अपि लक्षाधीशाः भवितुम् अर्हन्ति। यः परिश्रमेण कार्यं करोति सः धनिकः भविष्यति। यदि सामर्थ्यं स्यात् तर्हि षान् षू अपि धनिकः भवेत् नाम'' इति परस्परम् उक्तवन्तः ते।

अनन्तरं मेया षान् षू च अल्पैः स्ववस्तुभिः सह पूर्वस्यां दिशि स्थितं गृहं गतवन्तौ। तत् तु जीर्णं गृहम्। यदि वृष्टिः भवेत् तर्हि सर्वे प्रकोष्ठाः जलमयाः भवेयुः। तस्मिन् एव गृहे तौ वासम् आरब्धवन्तौ। ताभ्यां प्राप्ता भूमिः अपि न उत्तमा। शिलामय्यां तस्यां कृषिः तु महते कष्टाय। परिश्रमानुगुणं फलम् अपि दुर्लभम् एव।

कानिचन दिनानि गतानि। कुशाग्रबुद्ध्या ख्यातः कश्चन न्यायाधिकारी नवीनतया तस्मिन् ग्रामे नियुक्तः अभवत्। केभ्यश्चित् दिनेभ्यः पूर्वं तस्मिन् ग्रामे कश्चन सौचिकः केनचित् मारितः आसीत्। सौचिकस्य पत्नी

अनन्तरं सा दासीद्वारा वार्तां प्रेषितवती– ''अल्पवयस्कः मम पुत्रः अविवेकेन किमपि पृष्टवान्। तदर्थं कोपः न करणीयः। क्षन्तव्याः वयम्'' इति।

किन्तु एतेन षान् चीकोपः न शान्तः। अनन्तरदिने सः बान्धवान् आहूय षान्-षू-मेययोः, इतरेषां च पुरतः–

''एतां मेयां तत्पुत्रं च पोषयितुम् अहं न इच्छामि इति केनापि न भावनीयम्। षान् षू एतावत्पर्यन्तं बालः आसीत्। ह्यः तु तेन पित्रार्जितसम्पत्तौ भागः पृष्टः। एतादृशः सः इतः परं किं किं कुर्यात् इति न जाने। अहं वञ्चकः इति सर्वत्र वार्तां प्रसारयेत् अपि सः। अतः पित्रा यथा पुस्तके लिखितं तदनुगुणं पूर्वस्यां दिशि स्थितं गृहं, तत्पाश्र्वस्थां भूमिं

सज्जनं कञ्चित् अपराधित्वेन निर्दिष्टवती। पूर्वतनः न्यायाधीशः तस्याः वचने विश्वस्य तं सज्जनं कारागारे स्थापयित्वा तस्य मरणदण्डनम् आदिष्टवान् आसीत्। अयं नूतनः न्यायाधीशः युक्त्या अपराधिनम् अन्विष्य तं सज्जनं निर्दोषिणम् उद्घुष्टवान्। सर्वे जनाः न्यायाधीशस्य चातुर्यं न्यायपक्षपातं च बहुधा श्लाघितवन्तः।

'एतादृशः समर्थः न्यायाधीशः एव अन्याय्यं समीकर्तुं शक्नुयात्' इति आलोच्य न्यायाधीशस्य समीपं गतवती मेया। पत्या दत्तं चित्रपटं तस्मै प्रदर्श्य– "श्रीमन्! षान् ची अन्याय्यं कृतवान्। यावत् मम पुत्रेण प्राप्तव्यम् आसीत्, तावत् न दत्तवान् सः। मम पतिः मरणसमये एतत् चित्रं मह्यं दत्त्वा मरणशासनस्य रहस्यम् अत्र निगूहितम् अस्ति इति माम् उक्तवान् आसीत्। बुद्धिमान् न्यायाधीशः रहस्यम् उद्घाटयितुम् अर्हति इति तेन सूचितम् आसीत्" इति उक्तवती।

"सर्वं परिशीलयिष्यामि" इति उक्त्वा न्यायाधीशः तत् चित्रं स्वीकृत्य तां प्रेषितवान्। तस्याः निर्गमनस्य अनन्तरं चित्रं सुसूक्ष्मं परिशीलितवान्। चित्रे विशेषः कोऽपि न दृष्टः। अनन्तरं सः जागरूकतया चित्रं वस्त्रात् पृथक्कृतवान्। तत्र एकं कागदम् आसीत्। तस्मिन् एवं लिखितम् आसीत्–

"अहं वृद्धः। मम द्वितीयः पुत्रः षान् षू अल्पवयस्कः बालः। ज्येष्ठः पुत्रः षान् ची न



सज्जनः। सः अनुजस्य विषये अन्याय्यम् आचरेत् एव। अतः एव तस्मै दत्ते पुस्तके अहं निर्दिष्टवान् अस्मि यत् पूर्वस्यां दिशि स्थितं गृहं भूमिः च कनिष्ठपुत्राय दातव्यम् इति। जीर्णं तत् गृहम्, अनुत्तमां तां भूमिं च अनुजाय सन्तोषेण दद्यात् षान् ची। तत् गृहं यद्यपि जीर्णं, तथापि तत् मूल्यवत्। तस्य पूर्वदिशः भित्तेः अधः पञ्च रजकनाणकपात्राणि पश्चिमभित्तेः अधः एकं सुवर्णनाणकपात्रं पञ्च रजतनाणकपात्राणि च सन्ति। एतानि सर्वाणि मम कनिष्ठपुत्रेण प्राप्तव्यानि। तदा उभाभ्याम् अपि पुत्राभ्यां समानः भागः प्राप्तः भविष्यति" इति। पत्रे तदीयं हस्ताक्षरं दिनाङ्कश्च आसीत्।

अनन्तरदिने न्यायाधीशः षान् चीं



प्रेषितवान् न्यायाधीशः। मेयां सूचितवान् यत् भवती श्वः पुत्रेण सह षान् चीगृहे तिष्ठतु इति।

अनन्तरदिने षान् ची स्वगृहं सम्यक् अलङ्कृतवान्।न्यायाधीशस्य उपवेशनार्थम् उन्नते आसने व्याघ्रचर्म स्थापितवान्। सेवकद्वारा बन्धून् आनायितवान्।

अचिरात् एव आसन्दसहितायां शिबिकायाम् उपविश्य न्यायाधिकारी षान् चीगृहम् आगतवान्। शिबिकातः अवतीर्णः न्यायाधीशः द्वारसमीपम् आगत्य कञ्चित् पश्यन् इव विनयेन नमस्कृत्य अन्तः गमनार्थं मार्गं प्रदर्शयन् इव– "एवम् आगच्छतु महाभाग!" इति उक्तवान्। अनन्तरम् अज्ञातव्यक्त्या अव्यक्तं वार्तालापं कुर्वन् अन्तः गत्वा व्याघ्रचर्मयुक्तम् आसन्दं प्रदर्शयन्– "अत्र उपविशतु भवान्" इति उक्त्वा स्वयम् अन्यस्मिन् आसन्दे उपविष्टवान्। अनन्तरं तया अदृश्यव्यक्त्या वार्तालापं कुर्वन् सः उक्तवान्– "भवतः पत्नी माम् उक्तवती यत् ज्येष्ठपुत्रः मां वञ्चितवान् इति। कथं परिहारः एतस्य?.... एवं वा? ज्येष्ठपुत्रस्य व्यवहारः न्याय्यः न इति? कनिष्ठपुत्राय किं दातव्यम् इति भवतः अभिप्रायः? पूर्वस्यां दिशि स्थितं गृहम् इति? कथं तर्हि तदीयं जीवनं प्रचलेत्?.... एवं वा? अस्तु तावत्। भवान् यथा आदिशति तथा। तत् समग्रम् अनुजाय एव खलु? तथैव

स्वसमीपम् आनायितवान्। तं पृष्टवान् च– "भवान् विमातरं वञ्चितवान् वा? पित्रार्जितसम्पत्तौ योग्यः भागः अनुजाय न दत्तः वा? भवता अन्याय्यम् आचरितम् इति भवतः विमाता वदति खलु? किम् एतत् सत्यं वा?" इति।

"श्रीमन्! तस्याः वचनं मिथ्या। पित्रा लिखितं मरणशासनपत्रं मम समीपे अस्ति। तस्मिन् यथा सूचितं तथा भागः अनुजाय दत्तः अस्ति मया। कोऽपि लोपः न आचरितः। भवान् एव मरणशासनपत्रं परिशीलयतु" इति उक्तवान् षान् ची।

"अस्तु तावत्। श्वः भवतः गृहम् आगत्य भवतः पित्रा लिखितं मरणशासनपत्रं स्वयं दृष्ट्वा निर्णयं श्रावयिष्यामि" इति उक्त्वा तं

करोमि। भवान् निश्चिन्तः भवतु" इति।

न्यायाधीशः केनचित् पिशाचेन सह वार्तालापं कुर्वन् अस्ति इति भावितवन्तः सर्वे। भयेन भक्त्या च ते न्यायाधीशं पश्यन्तः स्थितवन्तः।

अन्ते न्यायाधीशः उत्थाय– "भवतः आदेशम् अक्षरशः पालयिष्यामि" इति विनयेन उक्त्वा परितः दृष्टिं प्रसारितवान्। आश्चर्येण पश्यन्तं षान् चीम् उक्तवान् सः– "एतावत्पर्यन्तं मया सह सम्भाषणं कुर्वन् आसीत् भवदीयः पिता। भवान् सम्भाषणं समग्रं श्रुतवान् खलु?" इति।

"मया तु किमपि न श्रुतम्। सर्वम् एतत् आश्चर्यकरम् अस्ति" इति उक्तवान् षान् ची।

"उन्नता आकृतिः। उन्नतः कपोलः। वातामफलसदृशे नेत्रे। दीर्घे वक्रे च भ्रुवौ। उन्नता नासिका। विशालौ कर्णौ। श्वेतं श्मश्रु। शिरसि अधिकारिधारणयोग्यं शिरस्त्रम्। रक्तवर्णीया चित्रवेष्टी। कटौ सुवर्णपट्टिका। एषः भूतपूर्वः राजप्रतिनिधिः नी षा-चियेन् एव खलु?" इति पृष्टवान् न्यायाधीशः।

"यदा सः जीवति स्म तदा एवम् एव आसीत्" इति उक्तवन्तः षान् ची बान्धवाः। न्यायाधीशः तु चित्रपटस्य आधारेण सर्वं वर्णितवान् आसीत्। तत् कोऽपि न जानाति खलु? मृतेन पिशाचरूपेण स्थितेन सह एव न्यायाधीशः वार्तालापं कृतवान् इति भावितवन्तः ते।



''गृहद्वयं भवदधीनं, पूर्वस्यां दिशि अन्यत् गृहं च अस्ति इति तेन उक्तम्। पूर्वस्यां दिशि स्थितं तत् गृहं गच्छाम तावत्'' इति उक्तवान् न्यायाधीशः।

षान् ची अन्ये च तत् गृहं प्रति गतवन्तः। ''एतत् गहम् अनुजाय दातुं न इच्छति इति नास्ति खलु?'' इति पृष्टवान् न्यायाधीशः।

''एतावता अनुजाय एतत् दत्तम् एव'' इति उक्तवान् षान् ची।

तस्य गृहस्य मध्यभागे स्थित्वा षान् चिना दत्तं पुस्तकं परिशीलयन् उक्तवन् न्यायाधीशः– ''यावत् प्राप्तव्यम् अस्ति तावत् प्राप्तवान् अस्ति षान् षू। पुस्तके सर्वं सुस्पष्टं लिखितम् अस्ति'' इति।

एतत् श्रुत्वा मेया दुःखेन– ''मम पुत्रः सर्वथा वञ्चितः अभवत्'' इति वदन्ती अश्रूणि स्रावितवती।

तदा न्यायाधीशः पुनः उक्तवान्– ''किन्तु इदानीं मया सह वार्तालापं कुर्वन् नी.षा-चियेन् सूचितवान् यत् एतस्मिन् गृहे रजतनाणकपात्राणि सुवर्णनाणकपात्राणि च निखातानि सन्ति इति। तानि अपि षान् षू एव प्राप्स्यति'' इति।

एतत् श्रुतवत्याः मेयायाः दुःखाश्रूणि आनन्दाश्रूणि जातानि। षान् ची तु दिग्भ्रान्तः सन्– ''सर्वम् अपि अनुजस्य एव? मम तत्र भागः नास्ति?'' इति पृष्टवान्।

''भवतः तत्र भागः कथम्? यत् गृहम् अनुजाय दत्तं तत्र यत् लभ्यते तत्सर्वम् अनुजस्य एव भवेत्'' इति वदन् न्यायाधीशः गृहस्य भित्तीः पातितवान्। एकत्र पञ्चसु पात्रेषु रजतनाणकानि, अपरत्र पुनः पञ्चसु रजतनाणकानि, एकस्मिन् सुवर्णनाणकानि च लब्धानि। तानि सर्वाणि षान् षू एव स्वीकुर्यात् इति लिखितरूपेण आज्ञां कृतवान् न्यायाधीशः। 'यदि अहम् अनुजेन सह प्रीत्या व्यवहरन् न्याय्यं भागम् अनुजाय दत्तवान् स्यां तर्हि एतेषु नाणकेषु अर्धभागः मया अपि प्राप्तः अभविष्यत्' इति पश्चात्तापम् अनुभूतवान् षान् ची।





## गाढनिद्राशीलः

आस्ट्रेलियादेशीयः रात्रिसञ्चारशीलः 'फ्राग् मौत्' नामकः पक्षी दिने तथा निद्रां करोति यत् निद्रास्थं तं वयम् उन्नीय अन्यत्र पातयामः चेदपि सः जागरितः न भवति!



## राक्षसगोधिकायाः अण्डम्

राक्षसगोधिकायाः अतिविशालम् अण्डम् एषु दिनेषु फ्रान्स्देशे प्राप्तम् अस्ति। एतस्य अण्डस्य परिधिः ३.३ मीटर्। ८०,०००,००० वर्षेभ्यः पूर्वं निवसन्ती ३० पाददैर्घ्यमिता राक्षसगोधिका एतत् अण्डं प्रसूतवती स्यात् इति भाव्यते।



(राक्षसगोधिकाण्डस्य पार्श्वे कुक्कुटाण्डम्)

## अग्निपर्वताः

प्रपञ्चे आहत्य ४५५ अग्निपर्वताः स्युः। एतादतिरिच्य समुद्रतले ८० अग्निपर्वताः स्युः। केवले इण्डोनिशियादेशे एव १६७-१७७ अग्निपर्वतानां स्फोटाः अधिकृतरूपेण उल्लिखिताः सन्ति।



# कीदृशः उद्योगः सः?

| | |
|---|---|
| राजन् - किं भोः, भवान् मुम्बईनगरं गमिष्यति इति श्रुतम्। सत्यं वा? | Hi, I came to know that you are going to Bombay. Is it true? |
| कृष्णन् - केन उक्तम्? दिनकरेण? | Who told you? Dinakar? |
| रा - न, सः एषु दिनेषु न मिलितः एव। | No, we haven't at all met recently |
| कृ - तर्हि अन्येन केन उक्तम्? | Then who else could it be? |
| रा - केन इति न, कया इति पृच्छतु। | Why should it be he, why not it be she? |
| कृ - तर्हि मम मात्रा उक्तं स्यात्। | Maybe, my mother told you! |
| रा - आम्। ह्यः अहं भवतः गृहम् आगतवान् आसम्। भवान् तु न आसीत्। तदा सा वार्तालापसन्दर्भे एतदपि श्रावितवती। | Yes. I had come to your place yesterday. You were not there. She told me about it in the course of our talk. |
| कृ - कमपि मा वदतु इति अहं ताम् उक्तवान् आसम्। | I had asked her not to tell any body. |
| रा - मया ज्ञातं चेत् न काऽपि हानिः। वदतु, कीदृशः उद्योगः सः? | There can't be any harm in my knowing it. Tell me what the job is? |
| कृ - स्वायत्तसंस्थायां कस्याञ्चित् प्रबन्धकत्वम्। | Manager's job in a private company. |
| रा - तर्हि उत्तमः अवकाशः अयम्। कदा इतः निर्गमनम्? | It is a good chance then. When are you leaving? |
| कृ - नियुक्तिपत्रस्य निरीक्षायाम् अस्मि। तत् प्राप्तं चेत् अनन्तरदिने एव गमनम्। तत्र प्रवेशं प्राप्य एतदर्थं त्यागपत्रम् अर्पयिष्यामि। | I am waiting for the appointment order. If I get it, I will leave the very next day. After I have joined there, I will resign this job. |
| रा - शुभं भवतु इति आशासे। | Wish you the best of luck. |
| कृ - धन्योऽस्मि। | Thank you. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जनवरी-९० मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **सति सहाये, पदन्यासो न क्लेशाय।**

द्वितीयचित्रम् - **प्रेम्णि प्रपूर्णे, भारोऽपि महते तोषाय।**

प्रेषकः - श्री कोदण्डरामः, ७, सिंहपेरुमाळ्दक्षिणवीथी, वेण्णार्तीरम्, तञ्जापुरी-६१३००३.


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अकिञ्चनः - | Utterly poor | दूर्वा - | Panic grass |
| अनूदितम् - | Translated | निखातम् - | Hidden |
| आन्तम् - | Pawn | निरूढवती - | Conducted |
| आधिः - | Till the end | निर्निमेषम् - | Without winking |
| आसन्दः - | Chair | निर्वाचितः - | Elected |
| उत्कीर्णम् - | Sculptured | निश्रेणी - | Ladder |
| उपत्यका - | Foothills | पुलकितम् - | Thrilled |
| उपेत्य - | Having got | प्रतिघण्टम् - | At every hour |
| कागदम् - | Paper | प्रशस्तः - | Excellent |
| कुसीदवणिक् - | Money-lender | प्रादुर्भूतः - | Originated |
| कौशेयवस्त्रम् - | Silk cloth | बुद्बुदः - | Bubble |
| खेटकम् - | Shield | भूतपूर्वः - | Former |
| गोदोहनम् - | Milking | भ्रूः - | Eyebrow |
| चटकः - | Sparrow | यथास्थितम् - | As it was |
| चषकः - | Tumbler | योजनाबद्धम् - | Well planned |
| चित्रवेष्टी - | Coloured lungi | राजदूतः - | Ambassador |
| चेष्टा - | Movement | वातामफलम् - | Almond |
| जीर्णा - | Worn out | विद्रधिः - | Abscess |
| तालवृक्षः - | Fan-palm | समुच्चयः - | Complex |
| तृणीकृत्य - | Having neglected | स्फोटकम् - | Cracker |
| दीपिका - | Torch | हस्ताक्षरम् - | Signature |



# Sweet Talk With A Mango-Grove Parakeet

Hey!
Look at my new
mango sweet!

Hey!
Look at my new
mango sweet!

It's got real
mango inside,
birdy!

It's got real
mango inside,
birdy!

Sssssshut up now
and taste my
mango sweet!

Sssssshut up now
and taste my
mango sweet!

'Ya know
what I'm gonna
call it...

Aam-Ras

What did
ya say?

Aaaaam - Rrrrras.
But remember ... golden words
are not repeated !

Hi - hi - hi!



nutrine

AAM-RAS

A terrific treat
with real mango inside ...
in a pack as colourful as
a parakeet.

## Real Mango In Its Very True Colours

THE FINEST, WIDEST RANGE
nutrine
India's largest selling sweets

Visesh/NC/8940